आशाम्बरैः साकमथोज्जयन्ततीर्थार्थवादेऽम्बिकया प्रदत्ते ।
साहाय्यके जैनसुरामरीणां वात्सल्यकृत्वाद् जिनशासनस्य ॥१५॥
तुर्यस्तुतेराचरणा च चक्रे श्रीबप्पभट्टिप्रमुखैर्मुनीन्द्रैः ।
मेने न येनागमयुक्तिरागात् ततोऽजनि त्रिस्तुतिकप्रसिद्धिः ॥१६॥
चतुर्थवर्षे विधिपक्षकर्त्तेत्येतस्य दत्तं बिरुदं सुजातात् ।
गुणानुरात् पुनरामराज्ञा श्रीज्ञानचन्द्रः स च सूरिवर्यः ॥१७॥ त्रिभिः कुलकम् ।
तदीयपट्टे गुणचन्द्रसूरिर्येन प्रबोध्यावनिपं हि भीमम् ।
पापर्धि-मांसाशन-रात्रिभोज्य-पराङ्गनानां नियमाः प्रदत्ताः ॥१८॥
तत्पट्टगः श्रीगुरुशीलधर्मः क्रमेण शीलप्रभ-शीलरत्नौ ।
सूरी ततः श्रीगुरुशीलचन्द्रः श्रीवीरचन्द्रो गुरुशीलसुन्दरः ॥१९॥
श्रीधर्मरत्नो गुरुरेव सूरिः श्रीधर्मसिंहो गुरुसिद्धसिंहः ।
कुमारसेनो नृपजः सगर्भैणीहाथ भीतो हि ततः प्रबुद्धः ॥२०॥
स चाभवत् शीलगुणाह्वसूरिः सूरिः पदेऽस्याजनि देवभद्रः ।
यस्योचिवानागमिकाह्वयं श्रीकुमारपालः स्वगुरोः समक्षम् ॥२१॥
श्रीमान् जिनप्रभ इति द्वितीयोऽस्य सूरिर्वैरङ्गिकोऽजनि यकोऽनशनं चिकीर्षुः ।
भावी प्रभावक इति त्रिविधं न्यषेधि सुर्याऽतिभक्तिपरया जिनशासनस्य ॥२२॥
षण्मासतीर्थनतिविघ्नकरीं प्रबोध्य व्याघ्रीं तपोऽतिशयतः सुगतिं तु नीत्वा ।
अष्टादशाब्दसमयावधि यश्चकार नानातपःकरणतो विमलाद्रिसेवाम् ॥२३॥
नव्यस्तवेन नवचैत्यनतिं सदा यश्चक्रे जिनप्रभविभुः स महांस्तृतीयः ।
जज्ञेऽथ मुक्तमदचैत्यनिवासविद्यानन्दाह्वसूरिरतिधर्ममतिः प्रबुद्धः ॥२४॥
तुर्योऽथ शीतलविहारनिवारणार्थः संवेगवारिधिरभुद् गुणसेनसूरिः ।
चत्वार एव चतुरा अभवन् गणेऽस्मिन् सूरीश्वरा गुणगणप्रथितास्तदैव ॥२५॥
अष्टादशोरुशतमानमुनीश्वराणां वैरङ्गिकः परिकरः प्रवरस्तदाऽऽसीत् ।
सूरिभ्य एभ्य उरुसंयमिसाधुसारं शाखाचतुष्टयमथ क्रमशो बभूव ॥२६॥

अथार्या— श्रीदेवभद्रसूरेः पट्टेऽभूत् श्रीजिनप्रभयतीन्द्रः ।
तत्पट्टे पुनरजनि श्रीमान् गुणसेनसूरीशः ॥२७॥
प्रतिषेधे क्रियमाणे स्वाचरणा दृष्टिरागिगीतार्थैः ।
सूत्रोदितकतिवार्षिकपर्वादिकमूलमार्गाणाम् ॥२८॥

कर्णावत्यां भूपतिसाक्षिकमस्थापि येन शुद्धविधिः ।
श्रीगुणसेनगुरुपदे श्रीकीर्त्तिममुद्रसूरिरिह सोऽभूत् ॥२९॥ गीतिः । युग्मम् ॥

तत्पट्टाम्बुजतरणिर्दर्शितसुसरणिरनेकभव्यानाम् ।
विद्योदधिः शमनिधिः श्रीहेमसमुद्रगुरुरासीत् ॥३०॥

श्रीहेमचन्द्रसूरिर्वीजापुरवासिपेथडमहेभ्यः ।
यद्देशनाप्रबुद्धोऽकारयदुरुचैत्यसुचतुष्कम् ॥३१॥

सप्तसहजसुकृताप्त्यै साकं तैः सप्तविमलगिरियात्राः ।
स चकार च दुःसमये सत्रागारे घनान्नमदात् ॥३२॥

स्वसमयसकलश्रवणे वीराऽर्हद्-गौतमाऽभिधाच्चर्चितः।
रैरूप्यटङ्ककैः स च चक्रे चितकोशसुत्रितयम् ॥३३॥

सोऽर्बुदशैले गर्भालयं सबिम्बं व्यधापयच्चैत्ये ।
नेमेः सचित्तादननियमीत्यादि बहुसुकृततितमकरोत् ॥३४॥ गीतिः ॥

अथ वृत्तानि—तदनु मनुशताब्दे ( १४०० ) सूरिरत्नं गणेऽभूत् ।
सुगुरुजयसमुद्रः सर्वसूत्रेष्वधीती ।
मुनिशत(७००)लिपिपाठावेकघस्रे सृजंस्तत्
समयकविनिबद्धग्रन्थशुद्धिं व्यधाद् यः ॥३५॥

वर्षे षट्-शशि-वेद-शीतगुमिते ( १४१६ ) देवालयैर्द्वीषुभिः (१०)
साराङ्गाभिधसाधुसंघपतिना सार्द्धं महर्द्धिप्रथः ।
आसाको व्यवहृच्चकार महतीं यात्रां पदं हृद्द्वयी
संसेवी चतुरस्तथैव चतुरः सूरीन् मुदाऽस्थापयत् ॥३६॥

रस-कर-मनुवर्षे(१४२६)लब्धपट्टोदयः श्रीकमलतिलकसूरिस्तत्पदेऽभून्महाश्रीः ।
तप उपशमरूपं ज्योतिराबिभ्रतोद्यत्तपनहिमरुचौ तौ निर्जितौ येन सद्यः ॥३७॥

यत्पादाम्बुजभक्तिभृद् भृगुपुरावासी विशुद्धर्द्धिमान्
प्राग्वाटो भटसिंहठक्कुर इति श्राद्धो जिनोक्तार्थवित् ।
कारुण्याम्बुनिधिः सुधासमगिरा भूमीभुजोऽरं जपन्
देशेषु प्रवरेष्वमारिकरणावाटौघमासूत्रयत् ॥३८॥

ततोऽभवत् पुण्यदशाभिरामः श्रीमान् जयानन्दगुरुः सदाभः ।
दीपायितं येन बहुप्रमादतमोमये गच्छगृहाङ्गणेऽस्मिन् ॥३९॥

श्रीश्रीमालकुले सुधांशुविमले योऽजायत प्रोज्ज्वले
वर्षे सप्तमके विवेककलितः श्रीस्तम्भतीर्थे पुरे ।
आदाय व्रतमद्भुतैकधिषणो वर्षेऽजनि द्वादशे ।
व्याख्यां संघपुरश्चकार शर-भू(१५)वर्षे पदस्थोऽभवत् ॥४०॥
द्वाविंशेऽजनि वत्सरे रस-शराब्धीन्दु(१४५६)प्रमे वैक्रमे
वर्षे सूरिवरो बभूव नगरे श्रीक्षेत्रसंज्ञे च यः ।
आसासंघपनन्दनेभ्यकरणश्राद्धेन क्लृप्तोत्सवः
पश्चात् तं सकुटुम्बमेव शशि-भू(११)वर्षे मुदाऽदीक्षयत् ॥४१॥
विद्वान् व्याकरणे बुधः परमते सिद्धान्ततत्त्वे सुधी–
श्छन्दो-ऽलंकृति-काव्य-नाटक-कथा-तर्केषु बाढं दृढः ।
मेधावी गणितानुयोगविषये किं वा बहूक्तैरसौ
सूरीन्द्रोऽत्र कलिन्दिकाकुलगृहं निर्द्वन्द्वमेव क्षितौ ॥४२॥
आलोक्य स्वगणं क्रियासु शिथिलं मग्नं प्रमादाम्बुधा–
वुद्दध्रे किल बोधसद्गुणयुजा चारित्रपोतेन यः ।
तत्पापश्रुतदुर्जनोपधिमुखं चोज्झाञ्चकार क्षणात्
श्राद्धान् शुद्धनिधिं जिनागमविधिं चाबूबुधत् साधुधीः ॥४३॥
प्रवचनरथस्थितो यः श्रुतदिव्यास्त्रः सुशीलसन्नाहः ।
एकोऽपि कलिरिपुचमूं जित्वाऽभूद् भुवनविख्यातः ॥४४॥
येषां पाणितलं सरोजविमलं सत्पुण्यगन्धाकुलं
तेनात्तं किल गन्धचूर्णमभवन्माहात्म्यसौरभ्यभाक् ।
क्षिप्तं मण्डलिकेभ्यमौलिमभि यत्सम्यक्त्वसंघेशता–
प्रस्तावे किमु वर्ण्यमत्र भुवनान्यद्यापि तद् वासयेत् ॥४५॥
चक्रे नवजीर्णचैत्यकृत्यं चित्कोशं बहुदानधर्मशालाः ।
मुनि-नग-मनु(१४७७)वत्सरे सुयात्रां व्यवहरमण्डलिकः स येषु भक्तः ॥४६॥
श्रीमान् मेलिगदेव इभ्यहरिराजश्चेति तद्बान्धवौ
येषां वाक्यरसायनोर्जितगुणौ तद्बाहुदण्डाविव ।
जातौ तद्वदनेकपुण्यनिपुणावन्येऽपि सुश्रावकाः
साभा-भीममुखाः सुकृत्यकरणैः संपन्नलक्ष्मीफलाः ॥४७॥
श्रीदेवरत्नसूरिप्रवरास्तत्स्थापिता गुरुगुणाद्याः ।
गुरुसेविनो जयन्ति ग्रथितानेकोत्तरग्रन्थाः ॥४८॥

तेषां सतीर्थ्य एषां बिभ्रन् शिष्यत्वमस्ति पण्डितकः ।
नामार्थशीलसिंहो यो भट्टं वादिनं जितवान् ॥४९॥
तेनोदधि-निधि-वेदेन्दु(१४१४)मितेऽब्दे माधवोज्ज्वलचतुर्थ्याम् ।
रविवारे रचितमिदं श्रीचन्द्रचरित्रमतिरुचिरम् ॥५०॥
एतद्रचनापुण्यात् स्तात् सुलभं कर्तृ भव्यजीवानाम् ।
बोधिवसु वाच्यमानं विबुधैरिदमिह चिरं जयतु ॥५१॥
श्रीशीलसिंहपण्डितशिष्येन कृता च शीलहंसेन ।
जितगर्वस्वकगुरुगणभक्त्या विपुला प्रशस्तिश्रीः ॥५२॥
इति प्रशस्तिः ॥ ग्रन्थाग्रम् ३२७२, अक्षर ५ ॥

[ 4200 ]

**अन्तः**—वस्वङ्केषुमिते(५९८)वर्षे श्रीसिद्धर्षिरिदं महत् ।
प्राक्प्राकृतचरित्राद्धि चरित्रं संस्कृतं व्यधात् ॥६३॥
तस्मान्नानार्थसंदोहादुद्धृतेयं कथाऽत्र च ।
नून्याधिकान्यथायुक्तेर्मिथ्यादुःकृतमस्तु मे ॥६४॥

लिषितं पटेल मईजीभाई दाजीभाई गाम बोरमदना संवत् १९६१ ना सावणवदी ११ ने शनीवारे गांम वडोदरामधे लखुं छे संपूर्णम् ।

[ 4203 ]

**अन्तः**—संवत् सिद्धि-रसाष्टैक(१८६८)प्रमिते मार्गशीर्षके ।
मासे हि कृष्णपक्षे च दशम्यां चरितं कृतम् ॥१॥
श्रीजिनहर्षसूरीणां राज्ये रम्ये प्रवर्त्तते ।
प्राकृतात् संस्कृतं रम्यं कृतं च जयकीर्त्तिना ॥२॥
इति श्रीश्रीपालचरित्रे गद्यबन्धे चतुर्थप्रस्तावः ४ ॥

संवत् १९०५ शाके १७६९ का मिति आषाढकृष्णा षष्ठी गुरुवासरे लिखितं पं. सागरचन्द्रयतिना लसकरमध्ये । महाराज—जीयाजीरावसेंधियाविजयराज्ये ।
( ग्रन्थकर्तुः प्रशस्तिरन्यदीयहस्तेनैतत्प्रकारेण लिखितोपलभ्यते )—

श्रीमत्खरतरगच्छे कीर्तिरत्नाश्च सूरयः ।
तच्छाखायां सुजाता हि पाठकाः सुखलाभकाः ॥३॥
तेषां शिष्या महादक्षा जिनहंससुवाचकाः ।
तेषां शिष्याः सदाचाराः श्रीमन्माणिक्यमूर्त्तयः ॥४॥

महोपाध्यायपदवीं धारकाश्च जितेन्द्रियाः ।
तच्छिष्या **भा**वहर्षाश्च महाविद्याधरा वराः ॥५॥
**अ**मरविमलाश्चात्र तच्छिष्याः पाठका मुदा ।
तच्छिष्याश्च विराजन्तेऽ**मृ**तसुन्दरनामतः ॥६॥
वाचका राज्यमान्याश्च वद्यशास्त्रविशारदाः ।
तच्छिष्य**म**हिमाहेमः सतां मान्यो महासुरः ॥७॥
तद्भ्राता **ज**यकीर्त्तिश्च तेनेदं चरितं कृतम् ।
**का**न्तिरत्नसहायेन लिखितं सो(? शो)धितं मुदा ॥८॥
श्री[ मद् ]राजाधी(?धि)राजस्य **मू**लराजस्य भूपतेः ।
राज्ये प्रतापसंयुक्ते पुस्तिकेयं कृता मया ॥९॥
श्रीचिन्तामणिपार्श्वेशः रक्षां करोतु नित्यशः ।
**जे**सलमेरुमहादङ्गे चतुर्मासी कृता वरा ॥१०॥
**जी**वराजेन रचितं **श्री**पालचरितं सु(?शु)भम् ।
कुशलेनाशु लिखितं श्रीसद्गुरुप्रसादतः ॥११॥

[ 4206 ]

इति **श्री**पालचरित्रं संपूर्णं जातम्। संवत् १७८१ वर्षे मार्गशीर्षशुक्लचतुर्दश्यां **प**त्तनमध्ये श्री**पूर्णि**मापक्षे ढंढेरसंज्ञके भट्टारकश्री**म**हिमाप्रभसूरीश-शिष्यभट्टारकश्री**भाव**प्रभ-सूरिभिर्लिवी(पी)कृतमन्तरान्तरा च शिष्य**प्रे**मचन्द्रेण पूरितं शिष्यादीनां वाचनार्थे शुभं भवतु श्रीपार्श्वप्रसत्तेः ॥

श्रीमति **प**त्तनमध्ये ढंढेरपाटके वास्तव्यः ढंढेरकुटुम्बालंकार**प**नाउतशाखायां **प**ना-उतश्री**सू**रचन्द्रः तत्पुत्रौ श्री**म**नराज-**क**स्तूरनामानौ परमश्रावकौ श्री**म**नराज-भार्या**दी**पीवहू-सुत **फ**तेचन्द **बि**लाषीदास पुत्री**दू**ल्हबाई **प**नाउतश्री**क**स्तूर-भार्या**च**तुरवहू-पुत्री**जो**ईती । द्वितीयभार्या**पां**नांवहू परमश्राविका देवगुरुभक्तिकारिका धर्मानुरागिणी सुगुणाग्रणी-कृतसिद्धचक्रोद्यापनिका नवपदभक्तिकरणेन । तदन्तर्गतज्ञानपदोज्वालनार्थं लिखाप्य स्वगुरुभ्यः प्रदत्तं श्रियेऽस्तु ।

[ 4207 ]

**अन्तः**-पूज्यश्री**वि**जयादिरत्नसुगुरोः पादप्रसादाद् गुरो-
र्माद्यद्वादिकरीन्द्रसामजरिपोः सद्धर्मधीरो मुनिः ।
एतां प्राकृतरूपपूर्वचरिताम्भोधिं सुसोदरा(?)-
मालोड्याऽर[च]यच्च संस्कृतकथां व्याख्यातृमुद्रेतवे ॥५४॥

इति श्रीसिद्धचक्रोपरि श्रीपालकथानकं संपूर्णम् ॥

[ 4209 ]

**आदि :**–प्रणम्य वीरं घनकर्म्ममुक्तगणाधिपं गौतमसंज्ञमग्र्याम् ।
कुर्वे यथाबुद्धि चरित्रमग्र्यंश्रीपालराज्ञोद्भुतपुण्यकारि ॥१॥
आदौ प्राकृतभाषया विरचितं श्रीहेमचन्द्रर्षिणा
तच्छात्रं सुखबोधकारणकृते सुज्ञं मया चर्च्यते ।
तत् संवीक्ष्य पुरातनैर्बुधवरैरीक्ष्य स्वचित्ते कृपा
कर्त्तव्या मम बालिशस्य बहुलं धैर्य्यं समासृत्य वै ॥२॥

अर्हदादिनवपदानि हृदयकमलमध्ये ध्यात्वा उत्तमं श्रीसिद्धचक्रमाहात्म्यमहं किञ्चिज्जल्पामि ।

**अन्त:**– श्री वज्रसेनगणधरस्य पट्टाधीश्वरा: श्रीहेमतिलकसूरयस्तेषां शिष्यै रत्नशेखरसूरिभिः पूज्यत्वा[द्] बहुवचननिर्देशः । इयं श्रीपालनरवरेन्द्रकथा संकलिता रत्नशेखरसूरिभिरस्याः कथाया अनुक्रमेणोपयोगं विधाय पूर्वाचार्य्यकथनानुवादेन परिपाटी बद्धेत्यर्थः । पूर्वं तु कण्ठस्थाऽभूदिति संभाव्यते तच्छिष्यहेमचन्द्रेण साधुना गुरुभक्तिकलितेन विक्रमार्कसमयादष्टाविंशत्यधिके चतुर्दशशते (१४२८) व्यतीते सतीत्यर्थः संवत्सरे । पत्रेषु गाथारूपेण रचनां विधाय लिखितेत्यर्थः । यावन्महीतले सागरो वर्त्तते यावच्च मेरुः पर्वताधीशो वर्त्तते यावच्च गगनतले शशि-सूर्यौ वर्त्तेते तावत्कालपर्यन्तमेषा कथा वाच्यमाना नन्दतु आचन्द्रतारकं जगति वाच्यमाना भविकैः श्रूयमाणा सति(ती) भविकानां परमानन्दातिरेकं वितनोत्वित्यर्थः । गाथानिबन्धानुसारेण मया गद्यबन्धेनेयं कथा मन्दबुद्धिनामुपकाराय कृता, अस्यां यन्मया मन्दबुद्धितयाऽशुद्धं लिखितं तत्कृपालुभिर्विद्वद्भिर्ममोपरि कृपां विधाय संशोध्यमित्यर्थः । इति श्रीसिद्धचक्रमाहात्म्ययुता श्रीमहानरवरेन्द्रश्रीपालकथा सम्पूर्णतामगात् ।

श्रीलुम्पकाख्येऽभवदच्छकीर्तिर्गच्छे सदा भाग्यविशालशाली ।
नाम्ना महर्षि[:] हरचन्द्रजित्को बभूव दक्षो बुधराजिराजिते ॥१॥
तच्छिष्यवर्यो यशसा प्रसिद्धो नाम्ना यशोरूप इति प्रतीतः ।
तत्पादसंसेवनचञ्चरीकः परोपकाराय गुरुप्रहर्षः ॥२॥
वर्षे सप्त-मुनीभ-चन्द्र(१८७७)प्रमिते मासे वरे चाश्विने
पक्षे चन्द्रकलाकलापरुचिरे शुभ्रे चतुर्थ्यां तिथौ ।

घले चन्द्रसुतान्विते वरतरेऽकार्षीदृषि[ः] केशवः

श्रीश्रीपालनरेश्वरस्य चरितं प्रायोऽल्पधीहर्षदम् ॥३॥ युग्ममिदम् ।

देशे पण्डितराजिराजिततरे बङ्गे सुराज्यान्विते

प्रायो भीष्मसुताप्रवाहरुचिरे बालूचरे पत्तने ।

श्रद्धालुव्रजशोभिते जिनवरप्रासादहारान्विते

श्रीमच्छ्रीजिनराजशास्त्रनिपुणैः तत्साधुभिर्मण्डिते ॥४॥ कुलमिति शेषः ।

तर्क-युग्म-निधि-भू ( १९२६ )बरष द्वै बिशाख शुदि सप्त ।

कुजवारे बालूचरे राजऋषिकृत लिखित ॥१॥

रत्नप्रभु निज गुर नमी चरित जु शुभ श्रीपाल ।

श्रीमखसूदाबादमै जहां संघ श्रीमाल ॥२॥

[ 4229 ]

**अन्तः**—सुहवद्धणेण तेसिं सीसवयंसेण अप्पमइएण ।

दससड्ढाणं चरिअं उद्धरियं सत्तमंगाउ ॥४८॥

पनर[स]छायालीसे (१५४६) आसोमासम्मि सुद्धदसमीए ।

सुहवाररिक्खजीए लिहिअं चरिअं पवित्थरउ ॥४९॥

इति दशश्रावकचरित्रं समाप्तम् ॥

[ 4230 ]

**आदिः**—कमनहकंतिजलणपक्खालियदेहा सुनिम्मला हुंति ।

नरसुरविसरा पणया जेसिं ते जिणवरे नमह ॥१॥

वररयणवारिधारानियरं जस्सा पियंति अवियत्था ।

बप्पीहय व्व भव्वा नमामि तं वीरजिणमेहं ॥२॥

निम्मलदंसणनाणे सिद्धे वरसूरिणो गुणसमिद्धे ।

अज्झाबए य पवरे नमिऊण सुसाहुणो सव्वे ॥३॥

धम्माधम्मस्स फलं जह सिट्ठं गोयमेण मुणिवय(इ)णा ।

सेणियरायाईणं सुणह तह किंपि साहेमि ॥४॥

**अन्तः**—पज्जुन्न-संबपमुहा हरिवंससारा अद्धुट्ठकोडिपरिमाणधरा कुमारा ।

पत्ता विमुत्तिभवरे वि हु तेण तित्थं एवं वयंति महसूरिवरा पसत्थं ॥६॥

पज्जुन्न-संबचरितं समाप्तम् । श्लोकतो ग्रन्थमानं १०७०॥

[ 4231 ]

**मू० आदिः**— सकलपण्डितशिरोमणिपण्डितश्री१९ श्रीदयालसागरगणिचरणकमलेभ्यो नमो नमः । श्रीजिनाय नमः ।

**स्त० आदिः**— सकलपण्डितशिरोमणिपण्डितश्रीश्री२१श्रीश्रीदयालसागरगणिकमलेभ्यो नमो नमः ॥ श्रीगोडीपार्श्वनाथाय नमः ॥ इम कहिउं भरतषेत्रइं गौतम० ।

**स्त० अन्तः**—इति श्रीभरतचक्रवर्तिचरितं सम्पूर्णम् ॥

सकलपण्डितसि( शि )रोमणिपण्डितश्रीश्री२१श्रीश्रीदयालसागरगणितत्सि(त्शि)ष्यपण्डितप्रवरपण्डितश्री१९श्रीषी(क्षी)रसागरगणिस्तस्य लघुभ्राता पण्डितशिरोमणिपण्डितश्री१५श्रीऋषभसागरगणि-तत्सि(त्शि)ष्यपण्डितशिरोमणिपण्डितश्री ५ श्रीजगसागरगणि--तत्सि(त्शि)ष्यलघुभ्राता(तृ)पण्डितश्रीकेसरसागरगणिलिखितम् । इति वचनाद् भद्रं भूयात् ॥

संवत् १७७४ वर्षे शाके १६३९ प्रवर्त्तमाने कार्त्तिकमासे शुक्लपक्षे पूर्णमासीतिथौ गुरुवासरे श्रीधरोलनगरे श्रीगौडीपार्श्वनाथप्रसादात् ।

[ 4232 ]

**मू० आदिः**— सिरिवीरं नमिय जिणं पभावगं धम्मघोससूरिं च ।
लोइयभासाहिं फुडं संवेगकहाणयं लिहिमो ॥१॥
सिरिभुवणभाणुकेवलीचरिएणं जाणिऊण अइदुल्लहं ।
सम्मत्तचरणलंभं तत्थ सया होह अप्पमत्ता ॥२॥

**मू० अन्तः**—श्रीभुवनभानुकेवलिचरितमिदं गुम्फितं पुरा निपुणैः ।
मलधारगच्छमण्डनसूरिश्रीहेमचन्द्राह्वः ॥१॥

ततश्च—आसीत् श्रीराजगच्छे सदसि नरपतेरल्हणाख्यस्य संख्ये
ग्रन्थव्याख्याविधाताऽनलनृपतिपुरो वादिगर्वापहर्त्ता ।
जैनाज्ञायां प्रसक्तं जिनमतसुदृढं विग्रहे संविधाय
श्रीमज्जैनेन्द्रधर्म्मो मुनिकरणपटुर्धर्मसूरिर्मुनीन्द्रः ॥१॥
तेषां नाम्ना प्रकटो जयति श्रीधर्म्मघोषगच्छोऽयम् ।
श्रीमलयचन्द्रसूरिसूत्रा[मा]ऽभूद् विश्रुतसुगुणैः ॥२॥
तत्पदपङ्कजसूर्याः सूरिश्रीपद्मशेखरमुनीन्द्राः ।
तत्पट्टे विख्याताः सूरयः श्रीजिनचन्द्राख्याः ॥३॥
एतेषां सुप्रसादाद्धरिकुशलयतिः श्रावकाभ्यर्थनायै
बालानां बोधहेतोः स्फुटजिनवचनैर्ग्रन्थमेतं लिलेख ।

येनासौ नव्यलोकः कलयति विषमं मोहमिथ्यात्वभेदं
ज्ञात्वा चारित्रधर्म्मं सकलसुखकरं तत्र बद्धादरः स्यात् ॥४॥
यथा यथा धर्म्मधिया तरङ्गदृष्टान्तमेनं हृदि भावयन्ति ।
तथा तथा ज्ञातभवस्वरूपाः संवेगनिर्वेदरसं भजन्ते ॥५॥
मयकाऽपि मन्दबुद्ध्या यद्यत्र चक्रे समुद्यमः किञ्चि(कश्चि)त् ।
तत्पङ्कजयशेखरदत्तश्रुतलेशमाहात्म्यम् ॥६॥

**प्रशस्तिः**—इत्यादि श्रीभुवनभानुकेवलिदृष्टान्तमांहि बालावबोधः सम्पूर्णः ॥

संवत् १७७४ वर्षे कार्त्तिक शुदि १० दशमीतिथौ श्रीजिहानाबाद-नगरमध्ये लिखितम् ।

[ 4233 ]

**अन्तः**—विउसिज्ज विसयविसपाणमुक्कडं जो धरेइ णियचित्ते ।
सिरिभुवणभाणुअणुओगमेत्थ सो लहइ णिव्वाणं ति बेमि ॥१३॥

इह सिरिभुवणभाणुकेवलिसरूवगज्झिए अज्झप्पकहासारे दव्वाणुओगपरमागम-महासुयक्खंधणिज्जासभूए अणुओगचूलाखंधो णवमो सम्मत्तो तस्सम्मत्तीए सम्मत्तं सिरिभुवणभाणुचरियं ॥

भास्वन्नागमहत्तमोत्तमफणाराजीलसच्छत्रभृ—
द्धामा वामतनुस्पृशां समदृशा धर्म्मध्वनेरर्प्पकः ।
श्रीमद्रुस्तकपत्तनालयकृतप्राज्याधिवासः क्रिया—
च्छ्रीचिन्तामणिपार्श्व एष विमलां कल्याणमालामलम् ॥१॥

गणे खरतराह्वये गुणगणैकभूरात्मवित्
क्रियाकमलभास्करः स्मरपराक्रमोन्माथकः ।
कथाकथितविक्रमः क्रमनताशेषभूभर्तृको
बभूव भुवि विश्रुतश्रुतपयोराशिराशार्प्पकः ॥२॥

जिनप्रभ इति प्रभुः प्रभुरशेषसूर्यावले—
र्वलीविबुधपङ्क्तिषु कृतिषु मुख्यरेखोऽनिशम् ।
निशाधवकराकराभिदुरकीर्त्तिरर्त्तिप्रहः
प्रहाणरहितस्ततस्ततगुणव्रातकैराश्रितः ॥३॥ युग्मम् ।

तदन्वयेऽप्यस्ति विशालकीर्त्तिः स्फूर्त्तिर्यदीया नहि माति लोके ।
पद्मालया लाभ इति प्रसिद्धः समृद्धवंशोद्भवमूर्त्तिरुच्चैः ॥४॥

तेनासावुद्धृतो ग्रन्थः संस्कृतात् संस्कृतात्मना ।
विचित्रप्राकृतोद्भूतभाषया मुनिभाषितात् ॥५॥
षोडशशतत्(त्रि)तय(१६०३)प्रहायणस्याश्विने तिथौ षष्ठ्याम् ।
कैरविणीपतिवासरे मध्याह्नि साधुजनमान्यः ॥६॥
कुशलाँल्लक्ष्मीलाभः प्रकरणमिदमखिलबुधमनोरम्यम् ।
पूर्णमपूर्णज्ञानप्रज्ञानः शानुधरधीरः ॥७॥
इति श्रीभुवनभानुचरितं सम्पूर्णम् ॥
अट्ठ-हत्थि-भू(१८८८)वरिसे कत्तियसुद्धतेरसीदिवसे ।
सिरिभुवणभाणुचरियं बिहारिरिसिणा सुहं लिहियं ॥१॥
कोटलाणामणयरेहि डाहेहिं सोहिये सुविसिट्ठे ।
सिरिरामचन्द्रायरियकए लिहियं सिरिभुवणभाणुचरियं ॥२॥
श्रीमद्बृहज्जैनप्रकाशकस्य लुङ्कागणेशस्य कुशाग्रबुद्धेः ।
शिष्योऽनुचारी विमलेन्दु[सूरिः] लिलेख शास्त्रं गहनार्थयुक्तम् ॥३॥
यल्लिखितं मया चात्र शुद्धाशुद्धमथ भ्रमात् ।
प्राज्ञैः शोध्यं हि तद्वर्णं कृपां कृत्वा ममोपरि ॥४॥
श्रोतॄणां वाचकानां वै लेखकानां तथा परम् ।
मङ्गलं भवतु सर्वेषां शास्त्र[स्या]स्य प्रभावतः ॥५॥

[ 4234 ]

**मू० अन्तः**—इति श्रीभुवणभाणुकेवलिचरितं संपूर्णम् ।
संवच्छरम्मि मुणिहत्थिधिइप्पमाणे पोसाभिहाणवरमासधवलपक्खे (?) ।
आमोदओ विलिहियं नवमीतिहीए सव्वोसहं भुवणभाणुचरित्तमेयं ॥१॥
दयाचन्देण रिसिणा नियबोहकए कवित्तकमणीयं ।
जंगलजणवयविदिए सुनामतनयरम्मि पुरसिट्ठे ॥२॥
भग्नपृष्ठिकटिग्रीवं बद्धनेत्रमधोमुखम् ।
कष्टेन लिखितं शास्त्रं यत्नेन परिपालयेत् ॥१॥
पुस्तकलिखनपरिश्रमवेत्ता विद्वज्जनो नान्यः ।
सागरलङ्घनखेदं हनुमानेकः परं वेद ॥२॥
अज्ञानतो भ्रमवशादविमर्शतो वा यत् किञ्चिदत्र लिखितं मयका विरुद्धम् ।
तच्छोधयन्तु सुधियो धृतसाधुवादाः कारुण्यपुण्यमनसो मयि सुप्रसादाः ॥३॥
भद्रं भवतु भव्यानां सतां श्रेयो निरन्तरम् ॥

संवत् १९४३ चैत्रवदिद्वितीयायां भृगुवासरे लिपीकृतं बेलीराममिश्र कुञ्जरां-
वाले- मध्ये जिनमन्दिरे पार्श्वनाथप्रसादात् पठनार्थं श्रीउद्योतविजयजीमहाराजजी ॥

**स्त०आदिः**—श्रीमन्मुनिराजसिंहगुरुचरणेभ्यो नमोऽस्तु ॥

प्रणम्य परमानन्दबीजं जिनमथो गुरुम् ।
अध्यात्मसारस्तबको लिख्यते लोकभाषया ॥१॥

**स्त०अन्तः**-स्वस्तिश्रीसुखसम्पत्सुषमं यत्पादयुग्मं श्रयन् ।
श्रेयांसि प्रणिधानतोऽत्रभवते भूयांसि भव्यो भवी ।
त्रैलोक्यप्रथितप्रभावविशदं गायन्ति यं चानिशं ।
सौवर्णप्रभवः स वः श्यतु मलं श्रीपार्श्वचिन्तामणिः ॥१॥

श्रीमद्बृहन्नागपुरीयलङ्कागणेश्वरोऽभूद्विशदेन्दुकीर्त्तिः ।
जाग्रत्प्रतापोऽभिमतार्थदाता श्रीमज्जग[ज्]जीवनदाससूरिः ॥२॥
दिग्दन्तिसंख्येषु तदीयशिष्टशिष्येषु धीरः खलु पञ्चमोऽपि ।
गुणैरुदारैः प्रथमोऽभवद् यः पायात् स मां श्रीगुरुभद्रराजः ॥३॥
आसंस्तदीयांह्रिकजद्विरेफाः शुभाशयाष्ठाकुरसिंहजित्काः ।
यत्पादपांशुः श्रितमानवार्त्तिहारी प्रतीतो भुवि भव्यलोकैः ॥४॥
तदन्तेवासिनः श्लोकविमलीकृतविष्टपाः ।
पुण्यकारुण्यपीयूषपूर्णाङ्गाः शुद्धसंयमाः ॥५॥
प्रेक्षावत्प्रतिपन्नपन्नगपतिग्रन्थार्थसार्थोल्लस—
द्विद्वत्तापरिकर्म्मतार्पितमतीन्नौन्नत्यभृत्सम्मतोन् ।
सेवन्ते समयकान्तराधिपतयोऽभीष्टाप्तये योगिनो
धीराश्चाविरतं जयन्तु गुरवः श्रीराजसिंहाह्वयाः ॥६॥
स्वरितानामपि येषां सुदृशामपि भूयसी कृपादृष्टिः ।
जागर्त्ति जगद्धितदा[य्य]पारवाचो हि सत्तपसः ॥७॥
महा·यानां सुकृतालयानां तेषां हितैषी रघुनाथनामा ।
शिष्योऽस्मि विद्वज्जनसंगमीप्सुः सुधीर्विनेयादिसमन्वितोऽहम् ॥८॥
काठिन्यतोऽतिग्रहनेत्रचरित्रवर्द्धितो नो मतिः स्पृशति रत्नमिवार्थजातम् ।
तस्मालिखत् ततमर्थमिह प्रसत्य सद्यः परोपकृतिनोऽनलसा हि सत्तमाः ॥९॥
शिष्यैरिति विशेषः ।

इत्यर्थितो भुवनपूर्वकभानुसंज्ञसार्वस्वरूपकलितं ललितं चरित्रम् ।
लब्ध्वा(ध्वा)दिलाभगणिपुङ्गवदब्धमेतत् सार्थं व्यधामनिपुणोऽपि गुरोः प्रसादात् ॥१०॥

निगमेषु नाम नामनि धनिनिगमे नाकवत् सुरै रम्ये ।
श्रीजिनवचनसुधापासुश्रावकसंघशोभिते सुतराम् ॥११॥
अज्ञानतो भ्रमाद्वापि कूटं यत्तु लिपीकृतम्, तच्छोधयन्तु विद्वांसः ।
संवत् १९४३ चैत्रवदि द्वितीयायां लिपीकृतं बेलीराममिश्र कुञ्जरांवाले ।

[ 4236 ]

**अन्तः**—इति श्रीश्रीपालनरेन्द्रचरित्रं श्रीसिद्धचक्रमाहात्म्ययुतं समाप्तमिति ॥

संवत् १६५२ वर्षे कार्त्तिकमासे शुल्कपक्षे दशम्यां तिथौ मन्दवासरे पूर्वाभाद्रपदनक्षत्रे श्रीमालान्वये राङ्कयाणगोत्रे संगही(घवी) हंसराज-तत्पुत्रसज्जन-शिरोमणिदेवगुरुभक्तिकारकः जिनाज्ञाप्रतिपालकः द्वादशव्रतधारकः संगही(घवी) खींवसी-श्रेयोनिमित्तं लिखापितं इदं पुस्तकम् । श्रीतपागच्छमण्डनभट्टारकश्री४हीरविजयसूरीन्द्रः तस्य गच्छे पण्डितोत्तमपंडितश्रीकनककुशलगणिवाचनकृते ॥

श्रीमन्नागपुरीयसंज्ञकतपागच्छाक्षकक्षो मुनि-
लक्ष्मीदास इतीह योऽप्यकगुरूर्वीशैः पुनः संस्तुतः ।
तच्छिष्योऽप्यधुनाऽनणीयसि पुरे वैराटसंज्ञे च स—
न्नेतच्छास्त्रमलीलिखद् वरमुनिः श्रीरूपचन्द्राह्वयः ॥१॥

यादृशं० ॥१॥ यावन्मेरुधरा०॥२॥ श्रीसूर्याय नमः । श्रीगौतमाय नमः । श्रीअकब्बरराज्ये ॥

[ 4240 ]

**वृ०अन्तः**—इति श्रीश्रीपालचरित्रस्य संक्षेपव्याख्या ।

वर्षे नन्द-गुहास्य-सिद्धि-वसुधा(१८६९)संङ्ख्ये शुभे चाश्विने ।
मासे निर्मलचन्द्रके सुविजयाद्यायां दशम्यां तिथौ ।
पूज्यश्रीजिनहर्षसूरिगणभृत्सद्धर्मराज्ये मुदा
श्रीश्रीपालनरेन्द्रचारुचरिते व्याख्या समासात् कृता ॥१॥
श्रीमन्तो जिनभक्तिसूरिगुरवश्चान्द्रे कुले जज्ञिरे
तच्छिष्या जिनलाभसूरिमुनिपाः श्रीप्रीतितः सागराः ।
तच्छिष्यामृतधर्मवाचकवरास्तेषां विनेयक्षमा—
कल्याणाख्यसुपाठकेन सुधिया चेतःप्रसत्त्यै सदा ॥२॥ युग्मम् ।
पञ्चत्रीणि सहस्राणि साधिका द्व्यादिविंशतिः (५३२२) ।
श्रीपालचरितव्याख्या श्लोकसंख्याप्रमाणकम् ॥
संवत् १८९६ रा वर्षे मितिज्येष्ठवद ३ दिने लिषितं श्रीविक्रमपुरमध्ये ।

[ 4250 ]

**आदिः**—१ श्रीवर्द्धमानस्वामी । श्रीवीरादनु ६० वर्षैः पालकराज्यम् । तदनु ११८ वर्षी(र्षै) यावद् नवनन्दराज्यम् । श्रीवीरात् १५५ चन्द्रगुप्तः ॥

**अन्तः**—६१ श्रीआणन्दसोमसूरिः ॥ संवत् १५९६ वर्षे कार्त्तिकशुदि १५ दिने जन्म । संवत् १६०१ वर्षे कार्त्तिकशुदि १५ दिने दीक्षिताः पा० सांडाकृत-महामहेन । संवत् १६११ वर्षे कार्त्तिकवदि५दिने सांडाकृतमहोत्सवपूर्वकं पण्डितपदं दापितम् । संवत् १६२५ वर्षे वैशाखशुदिपञ्चम्यां पत्तने सं० पंचायणभार्या त्ररबाईपुत्ररत्नसंघवीदेवजीकृतमहामहेन श्रीसोमविमलसूरिणा पण्डितश्रीआनन्दसोमसूरीणां सूरिपदं दत्तम् । तत्समये गणपरिधापनिका विहिता । संवत् १६३० वर्षे अहमदावादे माहमासे माघशुदिपञ्चम्यां श्रीआणन्दसोमसूरीणां वन्दनदापनमहोत्सवः हंससोमगणि-देवसोमगणिवराणां च वाचकपदद्वयं दत्तम् । तस्मिन् समये वृद्धनगरीयसं०लखमणपुत्र-नानजी-सिंहजी-सूरजी-संघवी-मेघजीकेन समस्तविबुधपदपरिधापनिका-निशाजागर-साध-र्म्मिकवाच्छ(त्स)ल्यादिबहुद्रव्यव्ययेन महामहेच्छ(होत्स)वः कृतः ॥

[ 4252 ]

संवत् १५९५ वर्षे चैत्रशुदि ११ दिने गीतार्थनामानि लिख्यते—

तपापक्षे परमगुरुश्रीसौभाग्यहर्षसूरिराजराजेश्वर८श्रीसोमविमलसूरि । श्रीसकलहर्षसूरि ।

महोपाध्यायश्रीहर्षकल्लोलगणि ६ ।

सोमविमलसूरि ८ ।

पं० लावण्यसमुद्रग०

पं० विद्यासमुद्रग० ७ ।

पं० दानमंडनगणि

पं० हर्षजयगणि ६ ।

पं० अमरजयगणि

पं० कुशलभुवनग० ६ ।

पं० लक्ष्मीभुवनग० ६ ।

पं० हर्षकल्याणग० ३ ।

पं० प्रमोदसुन्दरग०

पं० सौभाग्यमाणिक्यग० ४ ।

पं० सौभाग्यविमलग० ५ ।

पं० प्रमोदविमलगणि ३ ।

पं० विवेकविजयगणि ३ ।

पं० विनयदेवगणि ३ ।

पं० विवेकदेवगणि ३ ।

पं० विनयकीर्त्तिग० ४ ।

पं० अमरकीर्त्तिग० २ ।

पं० हर्षज्ञानगणि ३ ।

पं० आणन्दहर्षगणि

पं० आणंदविजयग० ७ ।

पं० अमरहंसगणि २ ।

पं० प्रमोदहंसगणि ३ ।

पं० अमरहंसगणि ६ ।

पं० हंसप्रभगणि ६ ।

पं० विजयहंसगणि २ ।

पं० विनयभूषणग० ३ ।

पं० विजयकुलगणि ५ ।
पं० लावण्यनेमिगणि ३ ।
पं० आणन्दनेमिगणि ३
पं० शुभचन्द्रगणि ३ ।
पं० विवेकचारित्रग० ३ ।
पं० आणन्दप्रमोदग० ६ ।
पं० अमरप्रमोदग० २ ।
पं० हर्षतिलकग० २ ।
पं० प्रमोदशीलग० ६ ।
पं० सींघसारग० ३ ।
पं० प्रमोदमंडनग० २ ।
पं० विजयलाभग० ३ ।
पं० सुमतिविमलग० ३ ।
पं० विजयविमलग० ३ ।
पं० विजयचन्द्रग० ३ ।
पं० विनयकुशलग० २ ।
पं० विमलमंडनग० २ ।
पं० सहजधर्मगणि ६ ।
पं० सुन्दरधर्मगणि ६ ।
पं० हंसकनकगणि २ ।
पं० विद्यासुन्दरगणि १ ।
पं० उदयचन्द्रगणि ५ ।
पं० सौभाग्यचन्द्रग० ३ ।
पं० सुन्दरचन्द्रगणि
पं० हर्षसुन्दरगणि ५ ।
पं० संघहर्षगणि ३ ।
पं० सिंघवीरगणि ३ ।
पं० हर्षसिद्धान्तग० २ ।
पं० हर्षतीर्थगणि ३ ।
पं० उदयधीरग० ३ ।

पं० हर्षलाभग० ३ ।
पं० नयधीरग० ३ ।
पं० हीरवल्लभग० ३ ।
पं० उदयरत्नगणि ३ ।
पं० लक्ष्मीनन्दिगणि ३ ।
पं० हर्षदर्शनगणि १ ।
पं० विवेकहर्षग० ५ ।
पं० विनयरत्नग० ३ ।
पं० उभयसाधग० ५ ।
पं० सिंघचारित्रग० १ ।
पं० विमलचारित्रग० ४ ।
पं० सिंघधीरग० ३ ।
पं० सुन्दरधीरगणि ३ ।
पं० संघमाणिक्यग० ३ ।
पं० सौभाग्यज्ञानग० ३ ।
पं० विमलचन्द्रग० ३ ।
पं० कुशलप्रमोदग० ३ ।
पं० कुशलसंयमग० ६ ।
पं० हर्षकनकगणि ६ ।
पं० माणिक्यविमल ३ ।
पं० माणिक्यविशाल ३ ।
पं० अमरमूर्त्तिगणि ३ ।
पं० विशालरत्नगणि २ ।
पं० सौभाग्यसारग० २ ।
पं० उदयकमलग० ४ ।
पं० अमरसोमग० ३ ।
पं० विनयसोमग० १ ।
पं० विद्यासाधगणि २ ।
पं० उदयसहजग० २ ।
पं० विवेकप्रमोदग०

पं० विद्याजयग० ३ ।
पं० सुमतिमंडनग० २ ।
पं० लक्ष्मीकल्लोलग० ४ ।
पं० लक्ष्मीहंसग० ४ ।
पं० लक्ष्मीविमलग० १ ।
पं० सहजप्रमोदग० २ ।
आणंदचंद्रग० ३ ।
पं० हंसयशग० २ ।
पं० सौभाग्यचारित्रग० ।
पं० विवेकधर्मग०
पं० सुमतिकुलग०
पं० लक्ष्मीविजयग० ।
पं० लावण्यसोमग० ।
पं० विजयशिवग०
पं० लक्ष्मीचन्द्रग०
मह० श्रीउदयसुमतिग०

[ साध्वीगणः ]

प्र० लब्धिकमला ।
प्र० विवेकचूला ।
प्र० विनयलक्ष्मी ।
प्र० विमलचूला ।
प्र० सौभाग्यसुमति ।
प्र० आणंदशोभा ।

संवत् १५९७ (?) वर्षे श्रीसोमविमलसूरीणां व्ययकल्पाः ।

महोपाध्यायश्रीविजयकुलग० १।
पं० हर्षकल्याणग० क० १ ।
पं० लावण्यनेमिग० १ ।
प० आणंदनेमिग० १ ।
पं० आणंदचन्द्रग० १ ।
विमलविजयग० १ ।
पं० सहजप्रमोदग० १ ।
पं० लक्ष्मीसारग०
पं० लक्ष्मीसंयमग०
पं० सुमतिविवेकग०

[ 4256 ]

## १ यन्त्रम् ( प्रथमोदययन्त्रकम् ) ॥

| | यु० प्र० | गृ० प० | व्र० प० | यु० प० | स० आ० | मा० | दि० |
|---|---|---|---|---|---|---|---|
| १ | सुधर्म | ५० | ३० | २० | १०० | ३ | ३ |
| २ | जंबू | १६ | २० | ४४ | ८० | ५ | ५ |
| ३ | प्रभव | ३० | ४४ | ११ | ८५ | २ | २ |
| ४ | शय्यंभव | २८ | ११ | २३ | ६२ | ३ | ३ |
| ५ | यशोभद्र | २२ | १४ | ५० | ८६ | ४ | ४ |
| ६ | आर्यसंभूति | ४२ | ४० | ८ | ९० | ५ | ५ |
| ७ | भद्रबाहु | ४५ | १७ | १४ | ७६ | ७ | ७ |
| ८ | थूलभद्र | ३० | २४ | ४५ | ९९ | ५ | ५ |
| ९ | महागिरि | ३० | ४० | ३० | १०० | ५ | ५ |
| १० | सुहस्ति | ३० | २४ | ४६ | १०० | ६ | ६ |
| ११ | गुणसुन्दर | २४ | ३२ | ४४ | १०० | २ | २ |
| १२ | कालकाचार्य ( श्यामाचार्य ) | २० | ३५ | ४१ | ९६ | ३ | ३ |
| १३ | खंदिलाचार्य ( स्कंदिलाचार्य ) | २२ | ५८ | २८ | १०८ | ५ | ५ |
| १४ | रेवतिमित्रगुप्त | १४ | ४८ | ३६ | ९८ | ५ | ५ |
| १५ | धर्माचार्य | १८ | ४० | ४४ | १०२ | ५ | ५ |
| १६ | भद्रगुप्त | २१ | ४५ | ३९ | १०५ | ४ | ४ |
| १७ | सिंहगिरि श्रीगुप्त | ३५ | ५० | १५ | १०० | ७ | ७ |
| १८ | वयर ( वज्र ) | ८ | ४४ | ३६ | ८८ | ७ | ७ |
| १९ | आर्यरक्षित | २२ | ४० | १३ | ७५ | ७ | ७ |
| २० | दुर्बलिकापुष्पमित्र | १७ | ३० | १३ | ६० | ७ | ७ |

१. यु० प्र० — युगप्रधानाचार्यनामानि । गृ० प० – गृहवासपर्यायः ।
व्र० प० — व्रतपर्यायः । यु० प० – युगप्रधानपदवीपर्यायः ।
स० आ० – सर्वायुः । मा० - मासः । दि० – दिनम् । दी० प० – दीक्षापर्यायः ।

## २ यन्त्रम् ( द्वितीयोदययन्त्रम् )

| | यु० प्र० | गृ० प० | व्र० प० | यु० प० | स० आ० |
|---|---|---|---|---|---|
| १ | वयरसेनसूरि | ९ | १८ | ९३ | १२० |
| २ | नागहस्ति | १८ | १९ | ७९ | ११६ |
| ३ | रेवतिमित्र | २० | ३० | ५९ | १०९ |
| ४ | सिंहसूरि (ब्रह्मद्वीपिक) | १८ | २० | ७८ | ११६ |
| ५ | नागार्जुन वा० | १४ | १९ | ७८ | १११ |
| ६ | भूतदिन्न वा० | १८ | २२ | ७८ | ११८ |
| ७ | कालकाचार्य | १२ | ६० | ११ | ८३ |
| ८ | सत्यमित्र | १० | ३० | ७ | ४७ |
| ९ | हारिल | २७ | ३१ | ५४ | ११२ |
| १० | जिनभद्र (गणिक्षमा श्रमण) | २० | २० | ६० | १०० |
| ११ | उमास्वाति (वाचक) | २० | १५ | ७५ | ११० |
| १३ | पुष्पमित्रसूरि | ८ | ३० | ६० | ९८ |
| १२ | संभूति | १० | १९ | ४९ | ७८ |
| १४ | संभूतिगुप्त (माढर) | १० | ३० | ६० | १०० |
| १५ | धर्मगुरु (धर्मरक्षित) | १५ | २० | ४० | ७५ |
| १६ | ज्येष्ठांगगणि | १२ | १८ | ६१ | ९१ |
| १७ | फल्गुमित्र (फाल्गु०) | १४ | २३ | ३९ | ७६ |
| १८ | धर्मघोषमित्र | ८ | १५ | ७८ | १०१ |
| १९ | विनयमित्र | १० | १९ | ८६ | ११५ |
| २० | शीलमित्र | ११ | २० | ७९ | ११० |
| २१ | रेवतिमित्र | ९ | १६ | ७८ | १०३ |
| २२ | सुमिणमित्र | १० | १८ | ७८ | १०६ |
| २३ | अरिहमित्र ( ? हरिमित्र) | २० | ३० | ३० | ८० |

## ३ यन्त्रम् । गणधरपर्यायवर्षयन्त्रम् ।

| | श्रीवीतराग | गृ० प० | दी० प० | यु० प० | स० आ० |
|---|---|---|---|---|---|
| १ | इंद्रभूति | ५० | ३० | १२ | ९२ |
| २ | अग्निभूति | ४६ | १२ | १६ | ७४ |
| ३ | वायुभूति | ४२ | १० | १८ | ७० |
| ४ | व्यक्त | ५० | १२ | १८ | ८० |
| ५ | सौधर्म | ५० | ४२ | ८ | ७८ (१००) |
| ६ | मंडिक | ५३ | १४ | १६ | ८३ |
| ७ | मौर्यपुत्र | ६५ | १४ | २१ | १०० |
| ८ | अकंपित | ४८ | ९ | २१ | ७८ |
| ९ | अचल | ४६ | १२ | १४ | ७२ |
| १० | मेतार्य | ३६ | १० | १६ | ६२ |
| ११ | प्रभास | १६ | ८ | १६ | ४० |

## ४ यन्त्रम् । सर्वोदयेषु आद्ययुगप्रधाननामानि ।

| | युगप्रधान | गृ० प० | दी० प० | यु० प० | स० आ० |
|---|---|---|---|---|---|
| १ | सुधर्मस्वामी | ५० | ४२ | ८ | १०० |
| २ | वयरसेन | ९ | ८ | १३ | १२० |
| ३ | पाडिवयसूरि | ९ | ९ | ८२ | १०० |
| ४ | हरिसिंहसूरि | ९ | ६० | १३ | ८२ |
| ५ | नंदिमित्र | १३ | ५० | १० | ७३ |
| ६ | सूरसेन | १३ | ३० | १४ | ५७ |
| ७ | रविमित्रसूरि | १३ | ४० | १० | ६३ |
| ८ | श्रीप्रभ | १३ | ४२ | ८ | ६३ |
| ९ | मणिरत्नसूरि | १३ | ४२ | ८ | ६३ |
| १० | यशोमित्र | १४ | ४१ | ८ | ६३ |
| ११ | धनसिंह | १४ | ४० | १० | ६४ |
| १२ | सत्यमित्र | १४ | ४० | १२ | ६६ |
| १३ | धम्मिलसूरि | २० | ३० | १२ | ६२ |
| १४ | विजयनंदि | १२ | ३० | १४ | ५६ |

| | | | | | |
|---|---|---|---|---|---|
| १५ | सुमङ्गल | १२ | २२ | १४ | ४८ |
| १६ | धर्मसिंह | १२ | २२ | १८ | ५२ |
| १७ | जयदेव | १२ | २२ | १८ | ५२ |
| १८ | सूरदिन्न | १७ | २७ | १० | ५४ |
| १९ | विशाखभूति | १० | २० | २० | ५० |
| २० | कोडिन्नसूरि | १८ | २१ | ११ | ५० |
| २१ | माथुरसूरि | १० | २५ | १५ | ५० |
| २२ | वणियपुत्र | १० | २० | २७ | ५७ |
| २३ | दत्तसूरि | १० | १५ | २५ | ५० |

## ५ यन्त्रम् । सर्त्रोदयेषु चरमयुगप्रधाननामानि ।

| | युग प्र० | गृ० प० | व्र० प० | यु० प० | स० आ० |
|---|---|---|---|---|---|
| १ | दुर्बलिकापुष्यमित्र | १७ | ३० | १३ | ६० |
| २ | अरिहमित्र | २० | २३ | १८ | ६१ |
| ३ | विशाखनंदि | १५ | १० | १२ | ३७ |
| ४ | सुकीर्तिभद्र | १६ | २२ | १८ | ५६ |
| ५ | स्थावरभद्र | १३ | २० | १७ | ५० |
| ६ | रथसुत | १३ | २८ | १३ | ५४ |
| ७ | जयमङ्गल | १५ | २० | १३ | ४८ |
| ८ | सिद्धार्थमित्र | १५ | २० | १३ | ४८ |
| ९ | ईशानमित्र | १५ | ३० | १० | ५५ |
| १० | रथमित्र | २२ | २० | १८ | ६० |
| ११ | भरणिमित्र | १० | २० | २० | ५० |
| १२ | दृढमित्र | १४ | १५ | २६ | ५५ |
| १३ | संगतमित्र | १२ | १५ | २२ | ४९ |
| १४ | श्रीधरसूरि | १८ | २० | ८ | ४६ |
| १५ | मागधसूरि | १३ | १२ | ९ | ३३ |
| १६ | अमरभद्रसूरि | १५ | २४ | १३ | ५२ |
| १७ | रेवतिमित्र | १२ | १९ | १८ | ४९ |
| १८ | कीर्तिभद्र | २० | १० | १० | ४० |

| | | | | | |
|---|---|---|---|---|---|
| १९ | सुरमित्रसूरि | २० | १८ | ७ | ४५ |
| २० | फल्गुमित्र | १३ | १० | ७ | ३० |
| २१ | कल्याणमित्र | ८ | १६ | १४ | ३८ |
| २२ | देवमित्र | १२ | १२ | १२ | ३६ |
| २३ | दुप्पसहसूरि | ८ | सार्द्ध ४॥ | सार्द्ध ३॥ | १६ |

## ६ यन्त्रम् । तृतीयोदययुगप्रधाननामानि ॥

| | युग॰ प्र॰ | गृ॰ प॰ | दी॰ प॰ | यु॰ प॰ | स॰ आ |
|---|---|---|---|---|---|
| १ | पाडिवयसूरि | ९ | ८२ | ९ | १०० |
| २ | विष्णुमित्र | १० | २० | ४५ | ७५ |
| ३ | हरिमित्रसूरि | १६ | ४० | ५० | १०६ |
| ४ | संडिलसूरि | १५ | ५० | ५० | ११५ |
| ५ | जससूरि | २० | ३० | ४० | ९० |
| ६ | जिनचन्द्रसूरि | १५ | ३० | ३० | ७५ |
| ७ | जिनवल्लभसूरि | १० | ३० | ३० | ७० |
| ८ | जिनप्रभसूरि | १२ | २१ | १२ (+१) | ३६ |
| ९ | धर्मरुचिसूरि | १५ | ३० | ३८ | ८३ |
| १० | व(ह)रिचन्द्रसूरि | २० | ३० | ३८ | ८८ |
| ११ | सालिमित्र | २५ | ३५ | ३० | ९० |
| १२ | देवचन्द्रसूरि | १२ | २० | ३९ | ७१ |
| १३ | देवचन्द्रसूरि | २६ | ३० | २५ | ८१ |
| १४ | संडिल | १४ | ३० | २९ | ७३ |
| १५ | धम्मिल | ११ | ३० | ३२ | ७३ |
| १६ | चंद्रमित्र | १३ | ४० | ३८ | ९१ |
| १७ | भद्दिलसूरि | १२ | ३० | १९ | ६१ |
| १८ | जिनदास | ९ | २३ | १०(+१०) | ५२ |
| १९ | धर्मदासगणि | १४ | ३० | १२ | ५६ |
| २० | सूरि (र)प्रभ | १५ | ५३ (३५) | १८ | ६८ |
| २१ | रक्ष(क्षि)त | १३ | २८ | १९ | ६० |
| २२ | धर्मघोषसूरि | १० | २१ | १७ | ४८ |

| | | | | | |
|---|---|---|---|---|---|
| २३ | माना(नदेवा)चार्य | ११ | ३५ | १८ | ६४ |
| २४ | समुद्रसूरि | १०(२९) | २५ | १७ | ७१ |
| २५ | रोहसूरि | १० | २० | १८ | ८१(४८) |
| २६ | दिन्नसूरि | ८ | २२ | १० | ४० |
| २७ | च(चा)रित्रसूरि | १८ | ३५ | १७ | ७० |
| २८ | नानान्यानः (? ज्ञानाचार्यः) | १४ | ३० | १९ | ६३ |
| २९ | उपशान्तः | १२ | २४ | १७ | ५३ |
| ३० | जयघोषसूरि | १३ | २८ | १८ | ५९ |
| ३१ | श्रमणसेन | १२ | २४ | १८ | ५४ |
| ३२ | जसकार (? यशस्कर) | १० | २० | १० | ४० |
| ३३ | मकरसूरि | १२ | २५ | १३ | ५० |
| ३४ | गौतमाभसूरि | १० | २० | १० | ४० |
| ३५ | भारध्वजसूरि | ९ | २९ | १२ | ५० |
| ३६ | सूरिप्रभसूरि | १७ | २० | १० | ४७ |
| ३७ | स[? मय]सूरि | १८ | २० | २२ | ६० |
| ३८ | जिनप्रभसूरि | ८ | २२ | १५ | ४५ |
| ३९ | ज(जि)नगतिसूरि | १६ | २१ | ९ | ४६ |
| ४० | सुमतिसूरि | ९ | २८ | १३ | ५० |
| ४१ | सर्वघोषसूरि | १९ | ३० | ९ | ५८ |
| ४२ | स्तंभकीर्ति | १९ | ३१ | ८ | ५८ |
| ४३ | सगे(ज)सूरि | १५ | २० | १० | ४५ |
| ४४ | जिनेन्द्रसूरि | १५ | २० | १० | ४५ |
| ४५ | सुमतिसूरि | १२ | ३० | ९ | ५१ |
| ४६ | विमलसूरि | १० | २८ | ९ | ४७ |
| ४७ | म[द]नचन्द्रसूरि | ९ | २५ | ११ | ४५ |
| ४८ | मेघचन्द्रसूरि | ८ | २० | १३ | ४० |
| ४९ | शासुध्य(सुशुद्ध)सूरि | ९ | २१ | ८ | ३८ |
| ५० | माध्यसूरि | १० | ३३ | १३ | ५६ |
| ५१ | सम्यग(ग् गृ)हसूरि | १५ | २० | १० | ४५ |

| | | | | | |
|---|---|---|---|---|---|
| ५२ | स्तिम(सुमति)प्रभसूरि | १२ | ३० | १८ | ६० |
| ५३ | इन्द्रदत्त | ९ | २८ | ९ | ४६ |
| ५४ | अग्निमित्र | ९ | २५ | ११ | ४५ |
| ५५ | वायुमित्र | ८ | २० | १२ | ४० |
| ५६ | प्रद(दा)नसूरि | ९ | २१ | ८ | ३८ |
| ५७ | वज्रकान्ति | १० | २० | १४ | ४४ |
| ५८ | ग्रहपति | २० | २१ | १० | ५१ |
| ५९ | मनोरथसूरि | १६ | २० | ९ | ४५ |
| ६० | पूर्णभद्रसूरि | १५ | २० | १० | ४५ |
| ६१ | नंदमित्र | २० | १६ | ११ | ४७ |
| ६२ | भूतिगणसूरि | १० | २३ | १० | ४३ |
| ६३ | मोरीपुत्र | १० | २३ | १० | ४३ |
| ६४ | ऋषभसूरि | १५ | ३० | १० | ४५ |
| ६५ | अयंतसूरि | १४ | २५ | ११ | ५० |
| ६६ | चंदनसूरि | १६ | १८ | १३ | ४७ |
| ६७ | अलिंगसूरि | १५ | २० | १० | ४५ |
| ६८ | स्थविरसूरि | १५ | ३० | १० | ५५ |
| ६९ | साम्यसूरि | १० | ३० | १० | ५० |
| ७० | मेतार्य | १९ | ३० | ९ | ५८ |
| ७१ | प्रभाससूरि | ८ | २० | ११ | ३९ |
| ७२ | वैशानसूरि | २० | १२ | ८ | ४० |
| ७३ | तुंगीयसूरि | १६ | ३० | १२ | ५८ |
| ७४ | पलीयाचार्यसूरि | १२ | २८ | ५ | ४५ |
| ७५ | धर्मघोषसूरि | १६ | ६४ | १५ | ९५ |
| ७६ | रोहसूरि | १२ | ३० | १० | ५२ |
| ७७ | पु[ष्य]समुद्र | १० | २० | ११ | ४१ |
| ७८ | समुद्रसूरि | १६ | ३४ | ९ | ५९ |
| ७९ | जिनशेखरसूरि | १४ | ३० | ८ | ५२ |
| ८० | शतकमन (?) | १३ | ३१ | १२ | ५६ |
| ८१ | शान्तिसूरि | २० | ४० | ११ | ७१ |

| ८२ | हरिगुप्ति(प्त)सूरि | २५ | ३० | ७ | ६२ |
|---|---|---|---|---|---|
| ८३ | सिंहगिरिसूरि | १२ | ४० | १० | ६२ |
| ८४ | धनगिरि | १५ | ३० | १८ | ६३ |
| ८५ | धर्मरक्ष | १६ | ३२ | १४ | ६२ |
| ८६ | कृष्णरक्ष | १८ | ४० | ४ | ६२ |
| ८७ | मतिपति | १९ | १९ | ९ | ४७ |
| ८८ | शि[व]गत | १२ | ४० | १० | ६२ |
| ८९ | कौशिक | १५ | ३७ | ८ | ६० |
| ९० | आर्यज(य)श | १६ | ३२ | १४ | ६२ |
| ९१ | आर्यधर्म | १९ | ४० | ४ | ६३ |
| ९२ | आर्यमङ्गल | १९ | १९ | ९ | ५७ |
| ९३ | नन्दनाचार्य | १० | ३० | १२ | ५२ |
| ९४ | नागदत्त | १० | १७ | ७ | ३४ |
| ९५ | सनक्षत्र | १९ | ३० | ७ | ५६ |
| ९६ | सरक्षितसूरि | १० | १८ | १३ | ४१ |
| ९७ | समुद्रसूरि | १२ | २९ | ६ | ४७ |
| ९८ | वैशाखसूरि | २५ | १० | १९ | ५४ |

॥ ९०॥ युगप्रधान २००४ । युगप्रधानसम ११९६००० । मध्यमगुणसूरि ५५५५५४४४३३२६४९१ । सामान्यसूरि ५५५५५५५०५ । सर्वमीलने-५५-५५५५०००००००००० । सुसाधु १७०९११०१६०००० । सुसाध्वी १०९२३१२५६३२१९९ । सुश्रावक १६०३३१२४०००० । सुश्राविका ३५९२५३२००००० । उत्तमनृप ११९६००० ।

इति दुसमगंडिका समाप्ता । लिखिता मुनिविद्याविजयेन ॥ संवत् १६७९ वर्षे जालुरनगरे ॥

[ 4257 ]

आदिः—समजनि जनतानां भावतः प्रोन्नतानां
विनयभरनतानां यस्सुबुद्ध्यै समृद्ध्यै ।
स भवतु मतिशुद्ध्यै स्वीयवंशोद्भवानां
सुगुणपरिवृढानां श्रीमहावीरदेवः ॥१॥

प्रणम्य वीरं च गुरुं सरस्वतीं गणेश्वरान् सत्तमगौतमादिमान् ।
सुधर्म्मवंशप्रभवान् गणप्रभून् स्तुवे मुदा वृद्धपरम्पराश्रुतान् ॥२॥

**अन्तः**– शिष्याः श्रीजयसागरस्य सहजा अप्युत्तमेन्दोर्गणे-
लक्ष्मीचन्द्रगणेन्दवः समभवन् सौभाग्यभाग्योद्धुराः ।
तच्छिष्याः कुशलादिचन्द्रगणयस्तेषां सतीर्थ्यो वरां
सूरीणां परिपाटिकां सुकृतवाँल्लावण्यचन्द्रो मुदा ॥४५॥
वर्षे राम-रसाब्धि-चन्दिर(१४६३)मिते जाता गणीन्द्रावली
संशोध्या बिबुधैः कृपां मयि विधाय प्राञ्जलैरुद्यतैः ।
हित्वा दूष्यमुदारशुद्धधिषणैर्धार्यौषिका साधुभिः
श्रीसंघस्य सुचेतसां च सुधियां भूयात् सदा भावुकम् ॥४६॥
इति श्रीवीरस्वामिनो वंशानुक्रमः ॥

ॐकारागममन्त्रमूर्त्तिरुचिरा विघ्नौघनिर्नाशिनी
स्पष्टाभीष्टविशिष्टपौरुषकरी दुर्दान्तकात्यायनी ।
पावापर्वतमौलिनिर्भरलसत्प्रोत्तुङ्गचैत्यस्थिता
साक्षात्सिद्धिविधायिनी विजयते काले कलौ कालिका ॥१॥

[ 4259 ]

**अन्तः**–एवं तत्पट्टानुक्रमे स्वगच्छपरम्परायां श्रीउद्द्योतनसूरिः, श्रीजिनदत्तसूरिः, श्रीजिनकुशलसूरिः, श्रीजिनभद्रसूरिः, श्रीजिनचन्द्रसूरिः, तत्पट्टानुक्रमे श्रीजिनभक्तिसूरिः, श्रीजिनलाभसूरिः, श्रीजिनचन्द्रसूरिः, श्रीजिनहर्षसूरिः, श्रीजिनसौभाग्यसूरिः, तत्पट्टे श्रीगोतांणीगोत्रखरतरगच्छशृङ्गारहारवर्त्तमानभट्टारकश्रीजिनहंससूरिजीनी आग्यायै(ज्ञाये) श्रीसंघ जयवंतो प्रवर्त्तो । संवत् १९१८ रा मिती भाद्रवा वदि ९ ॥

[ 4270 ]

**आदिः**– सिरिदुसमाकालसिरिसमणसंघथयं ( दुःषमाकालश्रीश्रमणसङ्घस्तोत्रम् ।)
वीरजिणभुवणविस्सुअपवयणगयणिक्कदिणमणिसमाणो ।
वट्टंतसुअनिहाणे थुणामि सूरिजुगप्पहाणे ॥१॥

**अन्तः**– एवं देविंदनयं सिरिविजाणंद-धम्मकीत्तिपयं ।
वीरजिणपवयणठिइं दुसमसंघं णमह णिच्चं ॥२३॥
इय दुसमाकालसिरिसमणसंघथयं ॥
[ अत्र काश्चित् पङ्क्तय उद्धृताः ]

सिरिजिणनिव्वाणगमणरयणिए उज्जेणिए चंडपज्जोअमरणे पालओ [राया] अहिसित्तो । तेण य अपुत्तउदाइमरणे कोणिअरज्जं पाडिलपुरं पि अहिट्ठिअं । तस्स य वरिस ६० रज्जे-गोयम १२, सुहम्म ७, जम्बू ४४ जुगप्पहाणा ।

पुणो पाडलीपुरे ११, १०, १३, २५, २५, ६, ६, ४, ५५ नवनन्द वर्ष १५५ रज्जे जम्बूशेषवर्षाणि ४ । प्रभव ११-शय्यंभव २३-यशोभद्र ५०-सम्भूतिविजय ८-भद्रबाहु १४-स्थूलभद्र ४५- एवं वीरनिर्वाणात् २१५ ॥

मौरिअरज्जं १०८ तत्र- महागिरि ३०-सुहस्ति ४६-गुणसुन्दर ३२ उनवर्षाणि १२ । प्रकृष्टलब्धीनां प्रकीर्णकसहस्राणां व्यवच्छेदः--एवं वर्षाणि ३२३ ॥

राजा पुष्यमित्र ३०-बलमित्र-भानुमित्र ६० ( तत्र )-गुणसुन्दरस्यैव शेषवर्षाणि १२, कालिक ४ ( ४१ )-खंदिल ३८--एवं वर्षाणि ४१३ ॥

राजा नरवाहन ४० गर्दभिल्ल १३-शाक ४ तत्र--रेवतिमित्र ३६, आर्यमङ्गुधर्माचार्य २० । एवं वर्षाणि ४७० ॥

अत्रान्तरे -- बहुसिरिव्वय-स्वामि(स्वाति)-हारित-श्यामा-ऽऽर्यशाण्डिल्य-आर्यसमुद्रादयो भविष्यन्ति ॥

तह गद्दभिल्लरज्जस्स छेयगो कालगारिओ होही ।
छत्तीसगुणोवेओ गुणसयकलिओ पहाजुत्ता ॥१॥

वीरनिर्वाणात् ४५३ भरुअच्छे खपुटाचार्याः वृद्धवादी पञ्चकल्पविच्छेदो जीतकल्पोद्धारः प्रत्येकबुद्ध-स्वयंबुद्धविच्छेदो बुद्धबोधिताऽल्पता ॥

धर्माचार्यस्येव शेषवर्षाणि २ । भद्रगुप्त ३९-श्रीगुप्त १५-वज्रस्वामी ३६--एवं सर्वाङ्क ५८४ ॥ गर्द[भिल्ल]निवसुत-विक्रमादित्य ६०-धर्मादित्य ४०-भाइल्ल ११--एवं ५८१ ॥

अत्रान्तरे-धर्माचार्यशिष्यश्रीसिद्धसेनप्रभावकः । तथा तोषलिपुत्राचार्यप्रभावकः । आर्यरक्षितः १३ । राजा भाइल्ल १४ ॥ अत्रान्तरे-त्रिलासपुरे रुद्रदत्ताचार्यः प्रभावको युगप्रधानसमः ९ ॥

पुष्यमित्र( दुर्बलिकापुष्यमित्र ) २० । तथा राजा नाहडः १०--( एवं ) ६०५ शाकसंवत्सरः ॥ अत्रान्तरे-बोटिका निर्गताः-इति ६१७ प्रथमोदयः ॥ वयरसेण ३-नागहस्ति ६९-रेवतिमित्र ५९-बंभदिवगसिंह ७८-नागार्जुन ७८ ॥

पणसयरीसयाइं तिन्निसयसमन्निआइं अइकमिउं ॥
विक्कमकालाओ तओ बहुला वलभीभंगो समुप्पन्नो ॥१॥

बालभावालम्य(?) संघकज्जे उज्जमिओ जुगपहाणतुल्लेहिं ।
गंधव्ववाइवेआल संतिसूरिइ बहुलाए वल्हीए ॥१॥
एवं वर्षाणि ९०४ । भूतदिन्न ७९—कालिकार्य्य ११—
तेणउ य नवसएहिं समइक्कंतेहिं वद्धमाणाओ ।
पज्जोसवणाचउत्थी कालगसूरिहिंतो ठ[ वि ]आ ॥१॥
सत्यमित्र ७—हारिल ५४ —एवं वर्षाणि १०१५ वि० ५८५ ॥
पंचसए पणसिए विक्कमकालाओ झत्ति अत्थमिओ ।
हरिभद्दसूरीसरो भविआणं दिसउ कल्लाणं ॥१॥
जिनभद्रगणि ६०—उमास्वाति ७५— पुष्यतिष्य ६०—सम्भूतियति ५०—माढरसम्भूतिगुप्त ६०—एवं वर्षाणि १३६० ॥

[ अतः परं काश्चित् पङ्क्तयो लिखितास्तास्तदनन्तरम्— ]

९८० श्रीकल्पसूत्रम् । श्रीमहागिरिसंतानीयश्रीदेवर्धिगणिक्षमाश्रमणैर्लिखितम्। तस्मिन् वर्षे आनन्दपुरे ध्रुवसेननृपस्य पुत्रमरणे शोकार्तस्य समाध्यर्थं सभासमक्षं श्रीकल्पवाचना जाता इति बहुश्रुताः ॥

तेरसवास[स]एहिं वीराओ समतिएहिं अइक्कमिउं ।
सिरिबप्पभट्टसूरी विउसाणं सिरोमणी जाओ ॥१॥

इत्यादि द्वितीयोदयः ॥

[ अत्र काश्चित् पङ्क्तयो श्रीविनयविजयोपाध्यायरचितसुखबोधिकाटीकात उद्धृताः ]

एतद्ग्रन्थकर्तृणां श्रीधर्मघोषसूरी( ? री )णां वि० सं० १३२७ तमवर्षे सूरिपदं वि० सं०१३५७ तमे वर्षे स्वर्गमनम् ॥

इति समाप्तम् । कल्याणमस्तु ॥

[ 4274 ]

**आदिः**— इत्थं आयरियाणां पणवन्नं हुंति कोडिलक्खाओ ।
कोडिसहस्सा कोडिसएहिं तेहिं इत्तिया चेव ॥१॥
एआसिं मज्झाओ एगो निव्वुड गणगणाइन्नो ।
सव्वुत्तमसंगेणं तित्थयरसमाणसरिसगुरू ॥२॥
दुप्पसहो जा सूरी होहिंति जुगप्पहाण आयरिआ ।
अज्जसुहम्मपभइ चउरहिया दुन्नियसहस्सा ॥३॥

वीरजिणधम्मतित्थं पंचतिहिवरिससहसमिगवीसं ।
वरिसमएगेणूणं जंपंति तयं महासत्ता ॥४॥
तम्मि अ वड्ढंते पुण अणवच्छिन्नो य सूरिसंताणो ।
जाओ तेसिं पढमो सुहम्मसामी जुगप्पहाणो ॥५॥
जम्बू पभैवो सिज्जंभैवो य जसँभद्दसूरी ।
सम्भूई सिरिभद्दबाहुसामी तयणु सिरिथूलिभैपद्दहू ॥६॥
अज्जमहागिरिसूरि सुहत्थि-गुणसुन्दरपहुत्ततो ।
कालिगसूरि-खंदिलसूरि-रेवईसिरि-अज्जधम्मपहु ॥७॥
सिरिभद्दगुत्त सिरिगुत्त वयरसामी तह जक्खपहु ।
पज्जंते पन्नंतो जगगुरुणा पूसमित्तपहु ॥८॥
पंचावन्ना कोडी पंचावन्ना य सयसहस्सा य ।
पंचावन्नसहस्सा पंचसया चेव पणसीया ॥९॥ ५५५५५५५८५॥
एसो अ नामगाणं वीरेण पहुण पिंडीया संखा ।
ताण पुण परिवारो अनामगो अल्लिउ चेव ॥१०॥

इति श्रीवीरतीर्थस्वरूपम् ॥

संवत् १६९२ वर्षे कार्तिकसुदि ८ शनौ लिखितम् ॥

[ 4275 ]

**वृ० आदिः**– ॐ नमः श्रीतपागच्छाधिराजभट्टारकश्री ५ विजयसेनसूरिगुरुभ्यो नमः।
जिनेश्वरध्यानपरायणत्वाज्जिनेश्वरोक्तप्रतिपालनत्वात् ।
जिनेश्वरेणैक्यविधानतो यो यथार्थनामास्तु स संसुभूत्यै ॥१२॥
ज्ञानी कोऽपि न दर्शनी बत जगत्यस्तीह चेच्छीलवान्
दुष्प्रथे(? ष्प्रेक्ष्य)स्त्रितयो [न] लक्षिततनुश्चैषोऽनिशं साधुपः ।
इत्यामृष्य युगप्रधानपदवी यं शिश्रियेऽत्यादरात्
स श्रीमानतुलो जिनेश्वरगुरुश्चित्ते विधत्तां स्थितिम् ॥१३॥
काव्यालंकारविचारचातुरीं ग्राहितोऽनवहितोऽपि यैः ।
श्रीजिनहितनामभिरभिषेकैस्तानहं वन्दे ॥१४॥
नानातर्कवितर्ककर्कशलसद्वाणीकृपाणीस्फुर–
तेजःप्रौढतरप्रहारघटनानिष्पिष्टवादिव्रजाः ।
श्रीजैनागमतत्त्वभावितधियः प्रीतिप्रसन्नाननाः
सन्तु श्रीजिनपाल इत्यलमुपाध्यायाः क्षितौ विश्रुताः ॥१५॥

नानालंकारसारं रचितकृतबुधाश्चर्यचित्रप्रकारं
नानाछन्दोऽभिरामं नगरमुखमहावर्णकाव्यप्रकामम् ।
दृब्धं काव्यं सटीकं सकलकविगुणं तुर्यचक्रेश्वरस्य
क्षिप्रं यैस्तेऽभिषेकाः प्रथमजिनपदाश्लिष्टपादा मुदे नः ॥१६॥
यद्वक्त्रान्तोज(? न्ताब्ज)रङ्गाङ्गणभुवि भुवि नाभोगभङ्गीप्रबन्धा
नानाछन्द[:]प्रबन्धै रचितबुधमम(?न)श्चित्रचित्रप्रबन्धाः ।
नर्नर्त्युद्दामकामप्रकटनविकटोत्पाटपाटप्रचारा
श्रीवाणी नर्त्तकीव प्रसभमभिसभं स्फारहारप्रकारा ॥१७॥
सूरप्रभाभिषेका विवेकसेकातिरेकतश्छेकाः ।
प्रपुनन्तु श्रीमन्तस्ते मच्चित्तं सुधीमन्तः ॥१८॥
श्रीमद्वाग्जडदेशादानीय द्रुततरं लवणखेटे ।
दीक्षाशिक्षामग्राहि येन जिनपतिगुरुप्रष्टौः(? ष्ठः) ॥१९॥
सरलत्वविजितसरलं तरलं त्रिभिमार्गगुणगणग्रहणे ।
वागाचार्यं तमहं स्मरामि गुणगणियशश्चन्द्रम् ॥२०॥
क्वैताः श्रीजिनदत्तसूरिसुगुरोर्वाण्योऽब्धिमध्योपमाः
क्वाहं दुर्गमहाटवीमृगनिभः प्रास्तान्तरप्रातिभः ।
तद्वृत्या हितबुद्धिरुद्धतमतिः कर्णे यथाकुण्डलं
कुर्वन्नेव विधिच्युतेऽहमपि तल्लप्स्ये तथा हास्यताम् ॥२१॥
महात्मनः पुण्यतिथेस्तथापि तस्यैव माहात्म्यवशाद् विधास्ये ।
वृत्तिं विचित्रां गणभृच्छतस्य सार्द्धस्य संक्षिप्ततरां सुबोधाम् ॥२२॥

**वृत्त्यन्तः**— अत्र च जिनदत्तगणीति कविना श्लिष्टं स्वनाम निर्दिष्टं तत्र चायमर्थः जिनदत्तगणिन् जिनदत्ताचार्य इत्यात्मसम्बोधनं गुणशब्देनादावुपलक्षितं शतं गाथानामिति दृश्यं गुणशतमिति अग्रे तु यः पूर्वं प्रतिपादितः स एवार्थ इति गाथार्थः ॥१५०॥

इति श्रीजिनदत्तसूरियुगप्रवरविरचितस्य श्रीगणधरसार्द्धशतकाख्यप्रकरणस्य वृत्तिः समाप्ता ॥

जज्ञे श्रीजिनदत्तसूरिसुगुरोः पट्टाचलोद्द्योतन-
स्फूर्ज्जज्ज्ञानरुचिप्रतानतनुतानीता नतोद्यत्तमाः ।
सूरिः श्रीजिनचन्द्र इत्यपमलप्राञ्चत्सुवृत्तातुलः
सौन्दर्यादिकवर्यनिर्मलगुणैश्चित्रीयितक्ष्मातलः ॥१॥

तस्याभूद् भूपमूर्द्धोद्भटमुकुटतटीकोटिघृष्टांह्रिपद्मः
शिष्यः शस्यो बुधौघैर्जिनपतिरिति सन्नामतः सूरिरुच्चैः ।
विख्यातः क्षोणिपीठे सुविहितयतिराट्चक्रचक्राधिनाथ-
श्छन्दो-ऽलङ्कार-तर्कप्रमुखनिखिलसद्ग्रन्थविस्तारितार्थः ॥२॥

प्रतिदिनमपि सिद्धिप्रेयसीसंगसौख्यानुगतनवकथास्वाक्षिप्तचित्तं निरीक्ष्य ।
क्षणमपि दयितं तज्ज्ञानचारित्रलक्ष्मौ मुमुचतुरुदिता[....]त्मभीत्येव यं च ॥३॥

सुगुणनिजपतीनां कालदोषादभावे ध्रुवमतिगुरुशोकात् सर्वविद्याः समेत्य ।
बत हृदयसमुद्रेऽस्ताघगाम्भीर्यभाजि प्रकटितगुरुसत्त्वे यस्य सद्यो निपेतुः ॥४॥

तस्य स्वाचारनिष्ठा प्रसरगुरुतराबद्धकक्षस्य शश्व
न्निःक्लेशः शिष्यलेशः सुमतिगणिरिति ज्याप्रसिद्धाभिधानः ।
निर्देशात् सद्गुरूणां सुनिबिडजडताश्लिष्टधीरप्यधीताऽ-
ल्पग्रन्थस्तत्प्रसादाद् व्यरचयदमलां वृत्तिमेतां सुचेताः ॥५॥

प्रारब्धा श्रीस्तंभतीर्थवेलाकूले कुले श्रियाम् ।
मण्डपदुर्गे चेयं समर्थिता तथा प्रायः ॥६॥
प्रथमादर्शे लिखिता वृत्तिरियं श्रीजिनेश्वरगुरूणाम् ।
अस्मद्गुरुपट्टप्रतिष्ठितानां प्रभाववताम् ॥७॥

शिष्येण परोपकृतौ तपसि च बद्धोद्यमेन सदमेन ।
कायोत्सर्गेऽतन्द्रेण साधुना कनकचन्द्रेण ॥८॥

किञ्चिच्च— हेमप्रभः शालिभद्रोऽमृतमूर्त्तिरिहा[भ]वत् ।
लेखनात् पङ्क्तिकामार्ष्टेर्घुण्टनाच्चोपकारिणः ॥९॥

इह यदनवबोधाद्राभसिक्यान्मया वा उत पतदुपयोगादन्यथा किञ्चिदुक्तम् ।
तदलमनलसाः स्राग् ज्ञातसिद्धान्ततत्त्वाः मयकि कृतकृपाः श्रीधीधनाः शोधयन्तु ॥१०॥

कृत्वेमां विवृतिं यत्पुण्यं समुपार्जितं मया किमपि ।
तेन विधिधर्मरागी भूयाल्लोकः समस्तोऽयम् ॥११॥

शर-निधि दिनकर(१२९५)संख्ये विक्रमवर्षे गुरौ द्वितीयायाम् ।
राधे पूर्णीभूता वृत्तिरियं नन्दतात् सुचिरम् ॥१२॥

इति श्रीजिनपतिसूरियुगप्रवरविनेयपण्डितसुमतिगणिनामधेयविरचिता श्रीगणधर-सार्द्धशतकवृत्तिः समाप्ता शुभं भवतु । ग्रन्थाग्रम् १२००० ।

संवत् १९६४ रा० वार गुरु लिपीकृत् ल[हि]या **गंगाधरब्राह्मणपुष्करणा** र[हि]वासी **अई(हि)पुरमध्ये** ।

[ 4279 ]

**स्त० अन्तः**– इति महोपाध्यायश्री**धर्म**सागरगणिविरचिता श्री**तपागच्छपट्टावली** सूत्रवृत्तिः समाप्ता ॥

**हीर**विजयसूरीणां निर्देशाद् उपाध्यायश्री**विमलहर्ष**गणि-उपाध्यायश्री**कल्याणविजय**-गणि-उपाध्यायश्री**सोमविमल**गणि-पं०**लब्धिसागर**गणिप्रमुखगीतार्थैः संभूय **संवत् १६४८ वर्षे चैत्रबहुलषष्ठीशुक्रे अहम्मदावादनगरे** श्री**मुनिसुन्दर**सूरिकृत**गुर्वावली-जीर्णपट्टावली-दुष्षमासंघस्तोत्रयन्त्राद्यनुसारेण** संशोधिता अथापि यत् किञ्चित् शोधनार्हं **भवति तत् मध्यस्थगीतार्थैः** संशोध्यम् । किञ्चास्याः पट्टावल्याः शोधनात् प्राग् बहव आदर्शाः संजाताः सन्ति तथैवास्योपरि संशोध्य वाचनीया न त्वन्यथेति श्रीमत्परमगुरूणामनुशिष्टिरिति ॥

वाचकशिरोवतंसश्रीमत्**कल्याणविजय**गणिशिष्यः ।
प्रथमादर्शे सम्यग् विचार्य **शिवविजय**गणिरलिखत् ॥

इति श्री**गुर्वावलीवृत्तिः** सम्पूर्णा । संवत् १६६१ वर्षे साहा **लालजी**लि० ।

[ 4283 ]

**आदिः**– वंदिय वीरजिणिंदं तप्पट्टधरं च सामि**सोहम्मं** ।
बुच्छं परम्पराए कुलगं भव्वाण हिअहेउं ॥१॥

**अन्तः**– जुगपवरसरिससूरी इक्कारसलक्खसोलससहस्सा ।
सिरि**हीरविजय-सिंह**विजयदेवोवमा णेया ॥२८॥
सुद्धपरंपरमूलं एयं कुलगं पढित्तु भो भव्वा ।
सिरि**विजयदेव**महियं आराहह लहह सिद्धिं ॥९॥

इति श्री**शुद्धपरम्पराकुलकम्** ।

[ 4313 ]

**अन्तः**– **भद्रबाहुगुरुरूचे** पञ्चमः श्रुतकेवली ।
**विद्याप्रवादतः** पूर्वात् **ग्रहशान्ति**र्विनिर्मिता ॥१२॥

इति श्री**शान्तिग्रहस्तोत्रं** समाप्तम् ।

संवत् १७४२ वर्षे शुचिमासे ध्वान्तपक्षे ८ तिथौ **कुमुदिनीवासरे** लिखितानि स्तोत्राणि ।

[ 4336 ]

**अन्तः**– इति श्री**विश्वसारोद्धारे आपदुद्धारकबटुकस्तोत्रं** सम्पूर्णम् ।

संवत् १७०९ वर्षे माहमासे कृष्णपक्षे चतुर्थीतिथौ सोमवासरे। वडनगरमध्ये भट्टारकश्री १९ श्रीज्ञानसागरसूरिभिः वाचकश्री ५ श्रीगुणसागर-तत्शिष्यचेलां माहावजी। मुनिकांहानजी आत्मार्थे लखितम् ॥६॥

[ 4343 ]

**आदिः**– श्रीमहिमाप्रभसूरिगुरुभ्यो नमः। नमदसुरसुरालीमौलिकोटीरकोटी०।

**अन्तः**– अस्य श्रीबरडाभिधस्य वीराधिवीरस्य विशेषतो मूलमन्त्राराधनगुरु-सम्प्रदायावगममिति भद्रम्। इति श्रीपूर्णिमा[ग]च्छीयढंढेरसंज्ञकभट्टारकश्रीभावप्रभसूरिकृता स्तोत्रस्यामुष्य टीका समाप्ता। मन्दमतिशिष्याणामर्थबोधहेतवे।

इति श्रीबरडास्तोत्रं सम्पूर्णं लिखितं जोइतादासेन ॥

[ 4344 ]

**आदिः**– नमदसुरसुरालीमौलिकोटीरकोटीमणिघृणिसलिलोर्मिस्नातपादारविन्दम्।
त्रिभुवनजनतानां दत्तकल्याणमालं प्रणमत बरडाख्यं क्षेत्रपालं त्रिकालम् ॥१॥

**अन्तः**– इत्थं श्रीबरडाभिधाचलसुरो भूषैकभूषामणिः
भक्तिप्रह्वनमज्जगज्जनमनोभि(?भी)ष्टार्थचिन्तामणिः।
नूनं श्रीबरडाभिधानभृदसौ श्रीक्षेत्रपालो जग-
ज्जाग्रत्प्राग्रमहोदधिर्वितनुतां श्रेयांसि भूयांसि वः ॥९॥

इति श्रीबरडाक्षेत्राधीशस्तोत्रं समाप्तम्।

**अव० आदिः**–नत्वा सारस्वतं तेजः श्रीभावप्रभसूरिणा।
बरडक्षेत्रपालस्य स्तोत्रस्यार्थो विधीयते ॥१॥

नमदेति––हे जनाः ! यूयं त्रिकालं बरडाख्यं बरड इति नामानं क्षेत्रपालं प्रणमत नमस्कुरुत०।

**अव०अन्तः**– ये राकापक्षधारिणः सूरिवराः प्रथमं ते सूरिपदं प्राप्य बरडाभिधे गिरौ श्रीबरडक्षेत्रपालस्य यात्रामवश्यमेव कुर्युः। तत्र गत्वा दीपधूपादिकं घृतसिन्दूराभिरर्च्चां स्तुतिं च विधाय घृत-गुड-गोधूमपिष्टमैदामयकुल्लरिकायाः सपादमणमितायाः, अथवा सपादमणमितानां गुड-घृतमात्रमोदकानां नैवेद्यं कुर्युः। वर्षं वर्षं प्रति तु आश्विनमास-शुक्लपञ्चमीतिथौ गुडसपादसेर १।, घृतसपादसेर १।, आर्द्रगोधूमपिष्टसार्द्धद्विसेर २॥– एवं सर्वं मेलयित्वा कुल्लरिका पञ्चसेरप्रमिता क्रियते।

[ एतदनन्तरं 'पूर्णिमागच्छीय॰'इत्यतः 'जोइतादासेन' यावत् पुष्पिकापाठः नं० 4343 वज्ज्ञेयः ]

[ 4365 ]

**अन्तः**— इति श्रीगन्धर्वराजपुष्पदन्तविरचितं महिम्नस्तोत्रं समाप्तम् ॥

संवत् १८१३ वर्षे आसो वदि २दिने श्रीकच्छदेशे ग्रामश्रीसाभराईमध्ये श्रीअञ्चलगच्छे वा० श्री १०८ श्रीलक्ष्मीशेखरजीगणि-तत्शिष्यपं० श्री५लावण्यशेखरजीगणि-तत्शिष्यमुनिश्री५अमृतशेखरगणि-तत्शिष्यपङ्कजभ्रमरमुनिज्ञानशेखरगणिलिपिकृतार्थे ॥

[ 4368 ]

**आदिः**— ॐ नमः श्रीत्रिपुरसुन्दर्यै ।

श्रीशङ्कराचार्यकृते स्तवेऽस्मिन् टीकां चिकीर्षोर्मम मन्दबुद्धेः ।
विधूदयस्येव वचोऽस्तु युष्मद्वासाय सन्तोऽस्मि तथापि धन्यः(?)॥१॥

**अन्तः**— शेषा सौन्दर्यलहर्याः टीका सौभाग्यवर्धनीनाम्ना ।
कैवल्याश्रमरचिता पर[म]देवप्रमोदकरी ॥१॥
अत्राबद्धाः कृतधियः सत्यमालोक्य तत्त्वतः ।
शोधयन्तु विशेषज्ञा बद्धः सन्तोषमञ्जलिः ॥२॥
किञ्चिज्ज्ञापनयाऽनपाय इति चेदस्मत्कृतेरक्षर-
ग्रन्थेऽत्र स्वयमेव साधुपुरुषा दूरीकरिष्यन्ति तत् ।
सन्मार्गे पतितानि कण्टककुलान्यालोक्य किं साधवो
दूरीकृत्य न यान्ति तानि पथिकाः कर्त्तुं परेषां हितम् ॥३॥

इति श्रीगोविन्दाश्रम-शिष्यकैवल्याश्रमरचिता सौन्दर्यलहरीटीका समाप्तेति श्रीराजनगरे । संवत् १७७० प्रवर्त्तमाने ज्येष्ठमासे शुक्लपक्षे त्रयोदशीतिथौ भौमवासरे श्रीखरतरागच्छे षेमचन्द्रः लिपीचक्रे ॥

[ 4431 ]

**आदिः** — ऐन्द्रस्येव शरासनस्य दधती मध्येललाटप्रभं
शौक्लीं कान्तिमनुष्णगोरिव शिरस्यातन्वती सर्वतः ।
एषाऽसौ त्रिपुरा हृदि द्युतिरिवोष्णांशोः सदाहस्थिता
छिन्द्यान्नः सहसा पदैस्त्रिभिरघं ज्योतिर्मयी वाङ्मयी ॥१॥

**अन्तः**— सावद्यं निरवद्यमस्तु यदिवा किं वानया चिन्तया
नूनं स्तोत्रमिदं पठिष्यति जनो यस्यास्ति भक्तिस्त्वयि ।
संचिन्त्यापि लघुत्वमात्मनि दृढं संजल्पमानं हठात्
त्वद्भक्त्या मुखरीकृतेन रचितं यत् स्यान्ममापि ध्रुवम् ॥२१ ॥

वृ० आदिः– ॐ नमः श्रीत्रिपुरसुन्दर्यै ।

सर्वज्ञं पुण्डरीकाख्यं शङ्करं नाभिसम्भवम् ।
प्रणम्य टीकां वक्ष्ये संक्षेपेण लघुस्तवे ॥१॥

इह हि पूर्वं केचिन्महानरेन्द्रेण निजसभायां दूरदेशान्तराभ्यागतः समस्तशास्त्र-पारङ्गमः कोऽपि पण्डितः ग्रामणीर्यस्यापि शेषोत्कर्षं पृष्टः शीर्षे स्वहस्तकमलविन्यास-मात्रेण सर्वथा निरक्षरस्यापि गाङ्गतरङ्गानुकारिणी तत्कालाभिनवकाव्यकर्त्तव्यतामाह—

वृ० अन्तः– सकलकल्याणमयो भविष्यतीति वृत्तार्थः । इति श्रीलघ्वाचार्य-विरचितलघुस्तवटीका समाप्ता ॥

जातोनवाङ्गी[ वि ]वृतेर्विधातुरनुक्रमेणाभयदेवसूरेः ।
युगप्रधानो गुणशेखराह्वः सूरीश्वरः सम्प्रति तस्य पट्टे ॥१॥

[ 4435 ]

अन्तः–इत्येतत् त्रिपुरास्तवं लघुकृतं कामप्रदं मुक्तिदं
श्लोकोक्त्या च विराजितं गुरुतरैर्मन्त्रैः शुभैर्भूषितम् ।
भक्त्यैकाग्रमतिः पठिष्यति जनः श्रद्धान्वितो योऽन्वहं
तस्मै भाविकविल्वमेति नवरं लक्ष्मीश्च रोगक्षयः ॥२२॥

स्त०आदिः— [ दुहा ]—

जाकी सगति प्रभावतैं भयो विश्व सुविकास ।
सोई पदारथ चित धरो ध्यानलीन है तास ॥१॥

स्त०अन्तः— इति श्रीलघ्वाचार्यविरचितं लघुस्तोत्रं सम्पूर्णम् ।

दुहो— सतरौसै अट्ठाणवै ( १७५८ ) माघकृष्ण पष बीज ।
सोमवार ए वचनिका पूरण लिषी सबीज ॥१॥
गच्छ परतर कुलपेम के दयासिहके सीस ।
रूपचंद कीने सुगम स्तोत्र काव्य ईकईस ॥२॥

[ 4438 ]

इति जगत्प्रसूश्लोको विहितः सूरचन्द्रसाधुना स्वार्थं परार्थं च । वाच-नाचार्यवर्यधुर्यो धौर्यार्यसामर्थ्यसशौर्यगाम्भीर्य्यश्रीचारित्रोदयगणिमणीनां शिष्य पं० वीरकलशगणिधीराणां शिष्याणुसूरचन्द्रेणालेखि ।

[ 4445 ]

अन्तः— [ अस्यां प्रतौ विशेषश्लोकाः– ]

पठितं भणितं गुणितं जयविजयपरमाभिवन्दनं परमम् ।
सर्वाधिव्याधिहरणं त्रिजगति पद्मावतीस्तोत्रम् ॥३१॥ आर्याच्छन्दः ।
आद्यं चोपद्रवं हन्ति द्वितीयं भूतनाशनम् ।
तृतीयं चमरीं हन्ति चतुर्थं रिपुनाशनम् ॥३२॥
पञ्चमं तु जनानां च वशीकरणमुत्तमम् ।
षष्ठं चोच्चाटनं हन्ति सप्तमं दुःखनाशनम् ॥३३॥
हन्त्युद्वेगं चाष्टमं च नवमं सर्वकार्यकृत् ।
इष्टा भवन्ति तेषां च त्रिकालं पठना[ने] रताः ॥३४॥
इति श्रीपद्मावतीस्तोत्रं सम्पूर्णम् ॥

[ 4507 ]

**आदिः**—ॐ श्रीचण्डिकायै नमः । ऐँ नमः ॥

ऐन्दव्या कलयाऽवतंसितशिरोविस्तारिनादात्मकं
तद्रूपं जननि स्मरामि परमं चिन्मात्रमेकं तव ।
यत्रोदेति पराभिधा भगवती भासां हि तासां पदं
पश्यन्ती तनुमध्यमा विहरति स्वैरं च सा वैखरी ॥१॥

**अन्तः**—कोऽप्यचिन्त्यप्रभावोऽस्य स्तोत्रस्य प्रत्ययावहः ।
श्रीशम्भु(म्भो)राज्ञया सर्वा सिद्धयोऽत्र प्रतिष्ठताः ॥४६॥
इति सरस्वतीमन्त्रगर्भितस्तोत्रं सम्पूर्णम् ॥

संवद्गगन-गुण-मुनीन्दुवर्षे ( १७३० ) तपसि मासे बहुलाष्टम्यां सोमवारे । वा० कनककुमारगणीनां शिष्येण पण्डितकनकविलासेनालेखि स्तोत्रमिदम् । वाचनाचार्यवर्यधुर्यविज्ञजनसंस्मर्यभ्रातृ-श्रीयोधाजीवाचनाय शुभं भवतु । यादृशं चोपरितनं दृष्टं तादृशं लिखितं, लेखकस्य दोषो न देयः विज्ञैः शुद्धस्योपरि शोधनीयम् ॥

कान्तया कान्तसंयोगे किमकारि नवोढया ।
अत्रापि गदितं श्लोके यो जानाति स पण्डितः ॥१॥
अत्र क्रिया गोपिताऽस्ति ।

रोचते या सपुन्यानां पापानां या न रोचते ।
गौराङ्गी वल्लभा पत्युः सा नारी मम कथ्यताम् ॥२॥
अत्र कर्त्ता गोपितोऽस्ति ।

[ 4553 ]

**आदिः**—कल्याणङ्कुरवारिदः शमसुधावार्द्धेः सुधादीधितिः
कारुण्याम्बुजतिग्मरोचिरखिलक्ष्मापीतकल्पद्रुमः ।
मोहध्वान्ततविप्रदीपकलिका संसारनिस्तारकृत्
भव्यानां शिवतातिरस्तु भगवान् वामासुतोऽयं जिनः ॥१॥

**अन्तः**—शाश्वतश्रीप्रभकर्मवृक्षपटलीनेमिप्रभप्रोल्लस-
च्छान्तिश्रीललितप्रभोऽमलविभाप्रोद्भावदेवैर्नतः ।
श्रीसर्वज्ञसुपुण्यसागरपरिस्फूर्ज्जद्यशश्चन्द्रमः-
सूरिप्रस्तुतवृद्धिसिद्धिसहित त्वं देहि मे मङ्गलम् ॥५॥११८॥

इति **मन्त्राधिराजषट्कर्मद्रव्यसमुदयषट्कर्मयन्त्रोद्धारो** नाम पञ्चमः पटलः । ग्रन्थाग्रम् १५५ ॥ सर्वग्रन्थश्लोकाः ५५९ शतानि पञ्चैकोनषष्टिश्लोकाधिकानि । पं० **चरणसाधुगणिना** लिखितः समग्रग्रन्थः स्वोपरोपकृत्यै ॥

[ 4572 ]

**अन्तः**—इति श्री**मातृकाश्लोकमालायां** भिन्नभिन्नपदार्थवर्णनो नाम द्वितीयः परिच्छेदः ॥

**प्रशस्तिः**— श्रीमद् विक्रमनगरे प्रवरेन्द्रवाद्यसम्यजनवृन्दैः ।
इषु-शर-षोडश( १६५५ )सङ्ख्ये वर्षे मासे च चैत्राख्ये ॥१॥
येषां प्रथते पृथ्व्यां कीर्त्तिः कर्पूरपूरसंकाशा ।
पाठकमुख्या नन्द्युज्ञानविमलपाठकाधीशाः ॥२॥
शिष्येण निर्म्ममे येषां **मातृकाश्लोकमालिका** ।
वाचकश्रीवल्लभाह्वेनात्मीयज्ञानस्य वृद्धये ॥३॥
यं वर्णं यश्च बुध कथयत्यादौ विधाय तं विद्वान् ।
कुर्यात् सद्यः पद्यं तुर्यं पादेषु निश्शङ्कः ॥४॥
यस्यैषाऽऽयाति मुखे सुखेन लभतां ससत्वरं सभ्यः ।
विद्वज्जनेषु विद्वान् सौभाग्यौघं कवित्वं च ॥५॥
यस्मिन् काव्येऽस्ति यन्नाम व्यत्ययात् तस्य सत्वरम् ।
यथोक्तवर्ण्यस्य सद्व्याख्या तदा जायेत भो बुधाः ! ॥६॥

इति श्री**मातृकाश्लोकमालाप्रशस्तिः** समाप्ता, तत्समाप्तौ समाप्ता चेयं श्री**मातृकाश्लोकमाला** । श्रीरस्तु, लिखितं त्रैलोक्यस्थान्ताह्वेन ।

[ 4585 ]

**वृ० अन्तः**— इति श्रीलब्धिस्तवः समाप्तः ।

संवत् विक्रमादित्यराज्यात् १९११ आषाढशुदित्रयोदश्यां १३ शनिवार-युतायां लिखितोऽयं श्री १०८ श्रीमत्पूज्याचार्यश्रीविमलचन्द्रसूरिवराणां शिष्येण श्री-१०८ श्रीमत्पूज्याचार्यश्रीरामचन्द्रसूरिवराणां लघुभ्राता(तृ)शिष्याभासेन विहारिऋषिणा तत्र यत्किञ्चित् प्रमादेनाल्पज्ञत्वेनाशुद्धं हीनमधिकं वा लिखितं तन्ममोपरि कृपां कृत्वा शोधनीयम् । शुभं भूयाल्लेखकपाठकान्(नां) धर्मकृपया शुभम् ॥

सुढौराख्यपुरे रम्ये पूर्णो जातो मनोरमः ।
ग्रन्थो लब्धिस्तवाख्योऽयं शोध्यतां मुनिसत्तमैः ॥१॥

[4627]

**अन्तः**– इति श्रीपार्वतीपुत्रनित्यनाथसिद्धविरचिते रसरत्नाकरे मन्त्रखण्डे मोहनाद्युच्चाटनं नाम नवमोपदेशः ।

संवत् १५९८ वर्षे आसोवदि १० गुरु । श्रीब्रह्माणगच्छे पूज्यभट्टारकश्री-६ विमलसूरि-वा० श्रीसाधुकीर्त्ति–तत्शिष्येण वा० शिवसुन्दरलक्षि(लिखि)तं परोपकाराय मंगल्य(ल)श्रेयसे भवतु ॥ वढीआरमद्धे(ध्ये) बोलिराग्रामे चतुर्मासिके स्थिता लक्षि(लिखि)तम् ॥

[4630]

**आदिः**– सिरिवीरजिणं नमिउं बहुविहजंतकलिहणकरणाइं ।
इह भणइ सीलसिंहो आगमिओ वायणायरिओ ॥१॥

**अन्तः**– सिरिदेवरयणगुरुवरगुणलंकियसीलसालिमुणिसिंघो ।
तस्सीसु कुट्ठपुरणसुरमणिगंथं इमं भणइ ॥१५१॥

इति कोष्ठकचिन्तामणिग्रन्थः सार्द्धशतकरूपः सम्पूर्णः । श्रीआगमगच्छेशश्रीदेवरत्नसूरिवरशिष्यवाचनाचार्यपं०शीलसिंह[सूरेः] कृतिरियं चिरं जीयात् ।

[4631]

**आदिः**– कोष्ठकचिन्तामणिसार्द्धशतकस्यावचूर्णिर्लिख्यते ।
सर्वज्ञं परमं ब्रह्म ध्यात्वा नत्वा च तं गुरुम् ।
कोष्ठ[क]चिन्तामणिग्रन्थं विवृणोमि मनागहम् ॥१॥

अत्र सूत्रम् ॥ सिरि० ॥ व्याख्या — श्रीवीरजिनं श्रीवर्द्धमानस्वामिनं नत्वा प्रणत्य बहुप्रकारेषु यन्त्रेषु कोष्ठकेषु अङ्कलिखनस्य करणानि युक्तीः । इह गणित्-शास्त्रे भणति कथयति शीलसिंहः आगमिको वाचनाचार्यः ।

अयमङ्कैर्लिखितकोष्ठकानां विचारो नवमपूर्वमध्यादग्रेतनैराचार्यैः समुद्धृतोऽस्ति, तन्मध्यादत्र कश्चिन्मात्रो लिखितोऽस्ति । परसमयेऽप्येषः कोष्ठकविचारः क्वचित् कीदृक्

क्वचित् कीदृगुदितोऽस्ति । तदुक्तमप्यवसेयम् । अत्र धुरि सिरीत्यत्र सकारस्य प्रान्ते भणतीत्यत्र तकारस्य च स्थापनादयं ग्रन्थः सत्पदाङ्कितो ज्ञेयः ।

ग्रन्थोऽयं पठ्यमानोऽत्र चिरं विजयतां भुवि ।
यावन्मेरुमहीचन्द्रभास्कराद्याः सुशाश्वताः ॥१॥
इत्यङ्कयन्त्रनिध्याख्या स्वपरात्मावबुद्धये ।
कोष्ठ[क]चिन्तामणिग्रन्थवृत्तिः कापि मया कृता ॥२॥

इत्यागमिकश्रीदेवरत्नसूरीन्द्रशिष्यवाचनाचर्यशीलसिंघ(ह)निर्मितायामङ्कयन्त्रनिधानाभिधानायां स्वोपज्ञश्रीकोष्ठकचिन्तामणिग्रन्थवृत्तौ समस्तवृत्तकोष्ठकाधिकारो नाम चतुर्थो वक्षस्कारः सम्पूर्णः ॥

[4644]

**अन्तः**–चक्रे श्रीशुभतिलकोपाध्यायैः स्वमतिशिल्पकल्पनया ।
व्याख्यानं गायत्र्याः क्रीडामात्रोपयोगमिदम् ॥
इति जिनप्रभसूरिविरचितं गायत्रीविवरणं समाप्तम् ॥

[4670]

**आदिः**–आधारे लिङ्गनाभौ प्रकटितहृदये तालुमूले ललाटे
द्वे पत्रे षोडशारे द्विदश दशदले द्वादशार्द्धे चतुष्के ।
वासान्ते बालमध्ये डफकठसहिते कण्ठदेशे स्वराणां
हं क्षं तत्त्वार्थयुक्तं सकलदलयुतं वर्णरूपं नमामि ॥१॥

**अन्तः**– इति बहिर्मातृकान्यासः सम्पूर्णः ॥

[4692]

**आदिः**–अथ तृतीयप्रस्थानविवरणसूचितो वज्रस्वाम्युद्धृतो वर्द्धमानविद्याकल्पः प्रकाश्यते ।

**अन्तः**–इति वर्द्धमानविद्याकल्पस्तृतीयोऽधिकारः । ग्रं० १७५, अक्षर १६ ॥

संवत् १५९६ वर्षे अहम्मदावादनगरे श्रीतपागच्छाधिराजश्री १९ श्रीसौभाग्यहर्षसूरीश्वर-शिष्यमुख्यमहोपाध्यायश्रीसोमविमलगणीश्वराणां कृते लिखिता प्रतिरियम् । पूज्य पं० कुलरत्नगणि-शिष्यपं०संघमाणिक्यगणिभिर्ज्ञानाराधनकृते ॥

[4693]

**आदिः**–कमलकर्णिकमध्ये ॐ श्रीमन्त्रराजो लेख्यः। पञ्चसदलके ॐ नमो जिणाणं ॐ नमो ओहिजिणाणं ।

**अन्तः**–विद्याविधानं कथितं सुहम्मसामीगणहरेण वर्द्धमानविद्यायन्त्रं सकलं कथितम् ।

श्रीआचार्यमन्त्रकल्पः श्रीपरमेष्ठियन्त्रविधिः वर्द्धमानविद्याकल्पश्च समा(प्त इ)ति ।

[4721]

**आदिः**–श्रीमलधारिगच्छसम्प्रदायागतस्य श्रीसूरिमन्त्रस्य आपुष्पदन्तं जीयात् । इति सूरिमन्त्रकल्पः ॥

**अन्तः**--संवत् १५१८ वर्षे श्रीवृद्धतपागच्छे भट्टारकप्रभुश्रीजयशेखरसूरिपट्टे भट्टारक श्रीजिनरत्नसूरिणा लिखितम् । मन्त्रकल्पोऽलिखत् ॥

[4748]

**आदिः**–शाखाप्रशाखाभिरतीवरम्यः सदोपगम्यः सुमनःसमूहैः ।
कल्पद्रुकल्पः परिपूरिताशः पायादपायात् प्रथमो जिनो वः ॥१॥

**अन्तः**–इत्याचार्यश्रीविनयचन्द्रविरचिते महं० पृथ्वीभटाभ्यर्थनया निर्मिते श्रीआदिनाथचरिते महाकाव्ये विनयाङ्के मिरीचिव्रतदर्शनान्तरश्रीशत्रुञ्जयसमवसरणश्रीपुण्डरीकज्ञाननिर्वाणश्रीभरथे(ते)श्वरचक्रवर्त्तिआदर्शकमण्डपमध्यस्थितकेवलज्ञानोत्पत्तिव्रतमधिगमन–वर्णनो नाम षष्ठः सर्गः ॥ सर्वाङ्कग्रन्थाग्रम् ४३७८ ।

संवत् १५७४ वर्षे उत्तरायने वसन्तऋतौ चैत्रसुदि १३ बुधे श्रीअणहिल्लपुरपत्तने लिषापितम् ।

स्वस्ति श्रीमदराकागच्छे श्रीचन्द्रप्रभु(भ)सूरिसंताने श्रीप्रधानशाखायां भट्टारकश्रीजयप्रभसूरीणां पट्टे भट्टारकश्रीभुवनप्रभसूरि-शिष्यवाचनाचार्यरत्नमेरुणा भट्टारकश्रीकमलप्रभु(भ)सूरिविजयमाने स्वयमेव वाचनार्थं स्वद्रव्योपार्जितेन पवित्रेण स्वगुरु-मातृ-पितृश्रेयोर्थं श्रीआदिनाथचरित्रं लिखापितम् ॥

[4749]

**आदिः**—श्रीगुरु-भारतीभ्यां नमः ॥

पूर्वं पाणिगृहीतकङ्कणकसत्कौसुम्भवासोवधू-
युग्मात् पल्लवितोऽभिषेकविधिना वृद्धिं परां प्राप यः ।
संजातः शतशाख एष तनुजैः श्रीनाभिभूभूरुहः
सच्छायः सुमनोमनोहरतनुस्तन्यात् कलं वः फलम् ॥१॥
प्राञ्चत्पञ्चफणामणिच्छलधराः पञ्चापि दीपाङ्कुराः
शोभन्ते शिवपत्तनोत्कमनसां मिथ्यात्वरात्रावपि ।

पञ्चाचारपथानिव प्रथयितुं यन्मूर्द्धदेशे स्थिराः
श्रीमानेष जिनश्चिनोतु परमं पृथ्वीसुतः प्रार्थितम् ॥२॥
नीलाश्मोदरसोदरद्युतिजुषा स्वश्रीमुखे श्रीपतेः
शङ्खः पूरयितुं कुतूहलरसावेशेन येनाहितः।
धत्ते नित्यसलीलनीलकमलक्रोडन्मरालोपमां
नेमिर्नेमिनरान्नरायणनतो नेताऽवताद् दुष्कृतात् ॥३॥
यन्नामापि समापिताखिलविपद्व्यापारमा(? ता)कारणं
श्रीणामत्र परत्र मन्त्रमयतां निर्विघ्नमास्तिघ्नुते।
सार्वः सर्वजनीनसर्वगमहामाहात्म्यकेलीगृहं
द्विश्चिन्तामणिरेष शेखरवरो विश्वेषु पार्श्वः श्रिये ॥४॥
जन्मस्नात्रमहे महेन्द्रनिवहैर्निर्मीयमाणा मुहुः
कालेयद्रवपिञ्जरैर्जलभरैः किं पीतिमानं गतः।
मेरुः काञ्चनसानुरित्थमधिकां प्रापच्च सिद्धिं पुरा।
श्रीवीरः परमेश्वरः प्रणमतां पुष्णातु पुण्यानि सः ॥५॥
मण्डपद्रङ्गशृङ्गाराः पञ्चाप्येते जिनेश्वराः।
शाखादौ जावडेन्द्रस्य प्रसन्नाः सन्तु सन्ततम् ॥६॥
तपागच्छाधिपाः श्रीमत्सोमसुन्दरसूरयः।
मुनिसुन्दरसूरीन्द्रा जयचन्द्राश्च सूरयः ॥७॥
श्रीरत्नशेखराचार्या श्रीलक्ष्मीसागराः परे।
जयप्रतिभुवः सन्तु जावडेऽमी युगोत्तमाः ॥८॥

ततश्च— सुमतिसाधुगुरुस्तपगच्छपः स्वपदपावितमालवमण्डलः।
कलयति स्म सविस्मयकारणैः सकलसूरिशिरोमणितां गुणैः ॥९॥
पूर्वं श्रेणिकभूपतिर्जिनपतेर्वीरस्य सेवापर-
स्तस्मात् सम्प्रतिमेदिनीपतिरभूच्छ्राद्धः सुहस्तिप्रभोः।
श्रीहेमस्य कुमारपालनृपतिर्भट्टैर्यथाऽऽमस्तथा
जीयाज्जावड एष शेखरतया सुश्रावकाणां गुरोः ॥१०॥
ख्यातः 'श्रीमालभूपाल'बिरुदः श्रावकाग्रणीः।
कालेऽस्मिन् शालिभद्रस्य सादृश्याद् दृश्यते हि यः ॥११॥
तस्याभ्यर्थनया ग्रन्थः श्रीमानानन्दसुन्दरः।
क्रियतेऽसौ मया सर्वविजयेन यथाश्रुतम् ॥१२॥

**अन्तः**—श्रीमालोज्ज्वलवंशमौक्तिकमणेः श्रीजावडस्यार्थनां
मत्वा मालवदेशमण्डनकरे श्रीमण्डपक्ष्माधरे ।
विद्वत्पुङ्गवतुङ्गसर्वविजयोपज्ञेऽधिकारः क्रमा-
दानन्दादिमसुन्दरेऽत्र सुकृतेर्ग्रन्थेऽष्टमो जेजितात् ॥६७॥

इति श्रीमालकुलश्रीमालभारिमालवेश्वरश्रीखलचीगयासदीनगुरुनरेन्द्रगङ्गाधिकारिव्यवहारिशिरोरत्नानुकारिलघुशालिभद्रेतिबिरुदधारिसुपुत्रश्रीहीरजीभ्रातृसं०लालाप्रमुखपरिवारपरिवृतसंघपतिश्रीजावडसमर्थाभ्यर्थनावश्य(श)वर्त्तिसाम्प्रतीनकविचक्रवर्त्तिमहापण्डितप्रष्ठश्रीमत्सर्वविजयगणिवरविधीयमाने श्रीबर्द्धमानदेशनारसनिधाने श्रीमदानन्दसुन्दराभिधानेधर्मशास्त्रप्रधाने नवम-दशमश्रावककिञ्चिद्गुणलवव्यावर्णनो नाम अष्टमोऽधिकारः ॥

श्रीमान् मालवदेशः पेशलपुरपत्तनादिविनिवेशः ।
यः सकलमण्डलेशः सम्प्रति बहुधान्यधारणैर्जयति ॥१॥

तन्मौलिमण्डनमखण्डरमानिदानं
श्रीमण्डपः पुरुषरत्नविधानिधानम् ।
प्राकार एष किल शेषभुजङ्गराज-
स्तस्याभितोऽस्ति कपिशीर्षसहस्रशीर्षः ॥२॥

पृथ्वीपतिर्जयति तत्र गयासदीनः पीनप्रतापपरितापितनैकभूपः ।
यस्य प्रशस्यविलसत्तरवारिधारातीर्थे निमज्य रिपवस्त्रिविषं जुषन्ते ॥३॥

तत्र श्रीमालवंशः स किल विजयते मण्डपाद्रौ महीयान्
पर्वश्रेणीप्रणीतोन्नतिरतिशयितश्चापि पात्रैरमात्रैः ।
यत्रौच्चैर्व्यक्तमुक्ताफलततया प्राप्तवन्तः पुमांसः
प्राप्ताः [ ? तं ] प्राप्नुवन्ति प्रतिकलसकलज्ञातिशृङ्गारकत्वम् ॥४॥

गोत्रे नान्दिलनाम्नि तत्र समभूत् संघेश उदाभिधः ( ? )
शुद्धानेकवसद्विवेकविनयच्छेक( ? कादि )मुख्यैर्गुणैः ।
रत्नैरेव समन्ततः समुदितैरस्तावधि....
स्तज्जाया डहरीर्विभाति लहरी पुण्यातिपुण्यात्मनाम् ॥५॥

सूनुस्तयोरतिशयोद्गतकीर्त्तिकान्तिः श्रीक्षेमराज इह राजत.... ।
यं पूर्णिमाप्रणयिनीं परिरभ्य पुञ्जीर्निःशेषनिर्मलकलाकलितं वितेने ॥६॥

तन्नन्दनः सदनमद्भुतभाग्यलक्ष्म्याः प्रक्षालिताखिलमलः शुचिदानतोयैः ।
श्रीहापराज इति राजदुरुप्रतापश्चांपूपतिर्नृपतिसंसदि योऽर्थमाप ॥७॥

तत्सूनुर्जेगसीरसीमविनयो दानादयो ये गुणाः
सर्वासंख्यगुणा इव ग्रहगणा व्योमाङ्गणं वव्रिरे ।
शीलोन्मीलिजलप्रवाहविलसत्पावित्र्यमाबिभ्रती
मांऊनामवती यदीययुवती गङ्गामतीत्याभवत् ॥८॥
गोल्हाह्वयस्तत्तनयो बभूव भूवल्लभस्यापि हि वल्लभो यः ।
अपुण्यपुण्योदकदुग्धवेत्ता रराज यः श्रीकुलराजहंसः ॥९॥
सामांनाम तदीया प्रिया श्रिया सन्निभा सुशीलवती ।
या शिश्राय तमेकं पुरुषोत्तममुत्तमा युवती ॥१०॥
तत्पुत्रः सुचरित्रसंचितयशाः श्रीराजमल्लः कृती
ख्यातः श्रीमहिमूदमालवपतेः शृङ्गारकः संसदाम् ।
सागूर्यस्य जनी यशोवसुखनी सच्छीललीलावनी
शुद्धाचारविचारिम[--]घनीभूतस्वभावावनी ॥११॥
टङ्काणामयुतं रसेन गुणितं स्पष्टं वितीर्य स्फुरत्-
तेजोराशिरुदात्तकीर्त्तिकलितः पात्रं पवित्रं श्रियाम् ।
लक्ष्मीसागरसूरिराजसुगुरोर्यः कारयामासिवान्
नानातोद्यरवं कलावभिनवं प्रौढप्रवेशोत्सवम् ॥१२॥
तदङ्गभूरागमरङ्गभूमिः श्रीजावडः सङ्घपतिर्विभाति ।
यच्चित्तपद्मं सरसं श्रयेत सार्वेश्वरोऽयं भ्रमरश्चिराय ॥१३॥
श्रीग्यासदीननृपतिः सदा ददातीह यस्य बहुमानम् ।
न वहति हृदाभिमानं तस्य समानं हि कं कविः कुरुते ॥१४॥
यन्मस्तके मुकुटवत्प्रकटा जिनाज्ञा जैनागमः श्रवसि यस्य तु कुण्डलाभः ।
भक्तिर्जिने जयति हारलतेव यस्य श्रीजावडः स किल भाति कुमारपालः ॥१५॥
श्रीमत्तपागणगरिष्ठपतेः प्रबोधमासाद्य यः सुमतिसाधुगुरोः सकाशात् ।
रैरूप्यरीतिघटितप्रतिमाप्रतिष्ठाकार्योत्सवं कलियुगाभिनवं विधत्ते ॥१६॥
जीवादे-सक्तादे-सुहागदेव्यश्च तदनु खीमादेः ।
एतास्तस्य चतस्रः स्वकरगृहीता रवेरिवाशास्ताः ॥१७॥
धनाईकुक्षिकासारहंसश्रीहीरनामकः ।
कुमारस्तस्य विस्तारप्राप्यमाणयशोभरः ॥१८॥
[खी]मादेस्तस्य सोनादेर्नाम्नैवं दयिते उभे ।
ताभ्यां सत्कल्पवल्लिभ्यामिव कल्पद्रुमो हि सः ॥१९॥

लालाख्यः साधुरधिको [यः] बन्धुस्तस्य निश्चलः ।
यन्मानसमिहाध्यासामास हंसो जिनेश्वरः ॥२०॥
लीलादेस्तस्य दयिता सदया शीलशालिनी ।
अलिनीव जिनाधीशधर्मोस्नलिनीवने ॥२१॥
एवं सारपरीवारः सदाचारविचारवान् ।
जिनशासनशृङ्गारः शुद्धव्यापारकारकः ॥२२॥
श्रीजावडो जगद्गोत्रचरितः परितो महीम् ।
महोभिर्मोहयत्येष योषां महौषधैरिव ॥२३॥ युग्मम् ॥
तेनायं जगतीप्रतीतसुकृतव्यूहेन विश्वम्भरा-
भूषाहेतुर्गुणोत्करेण कृतिना श्रीजावडेनाधुना ।
सत्रागारमिव व्यधाप्यत मया ग्रन्थो यथेष्टं जनाः
तृप्तास्तिष्ठथ तत्र मुक्तिनगराध्वन्याश्च धन्याश्च ये ॥२४॥
श्रीजावडेन किल शास्त्रमिषात् तटाकं
निर्मापितं भविकजीवकृते भवान्तः ।
तस्मिन् जिनेश्वरवचःसलिलानि पीत्वा
दुःपापतापशमनान्न शमैति कस्कः ॥२५॥
श्रीमत्तपागणगच्छपयोधिरत्नचारित्ररत्नोऽजनि वाचकेन्द्रः ।
यद्बुद्धिवेडाबहुशास्त्रवादान् नित्यं जगाहे किल हेलयैव ॥२६॥
तच्छिष्योऽजनि शिष्यस्वान्तवनोपान्तपल्लवनमेघः ।
वाचकजिनमाणिक्यो मयूरमिव मां व्यरीरचद् य इति ॥२७॥
चारित्ररत्नवाचकशिष्याः श्रीसर्वहंसगणिवर्याः ।
पण्डितपदवीधुर्याः सरससुधाजैत्रवाणिमाधुर्याः ॥२८॥
तच्छिष्यः शिवहेमपण्डितवरश्चारित्रचर्याङ्कुरः
संवेगप्रशमादिसद्गुणमहारत्नौघरत्नाकरः ।
तद्वत्पण्डितमौलिमण्डनमणिर्वादीभकुम्भे सृणिः
प्रख्योऽयं जयसाधुरुत्तमगणिश्रेणिषु माद्यद्घृणिः ॥२९॥
तच्छिष्यमुख्य एष श्लेष-समस्यार्थे काव्यजित् ।
काव्यं वितनोति ग्रन्थममुं समुदञ्चन्नैकरसपरमम् ॥३०॥
सर्वविजयः स धीमान् सीमाकवितार्किकप्रकाण्डानाम् ।
वरकाणपार्श्वनाथप्रसादसाह्लादहृदयतया ॥३१॥ युग्मम् ॥

याबद्व्योमतटे घटेत तरणिर्भूमौ सुवर्णाचलः
पाताले भुजगेश्वरः स्थिरतराः सन्ति त्रयोऽमी यथा ।
श्रीधर्मेऽपि च सिद्धसिद्धिपदवीमुख्या असङ्ख्यास्तथा
तावन्नन्दतु कर्तृकारकयुतं शास्त्रं सतां शर्मदम् ॥३२॥
यन्मन्दबुद्धिवशतो मयकाऽत्र शास्त्रे प्रोक्तं विरुद्धमविशुद्धमनार्हतं च ।
तच्छोधनीयमतिशायिमतिप्रसारैः कृत्वा कृपां मयि यथागममागमज्ञैः ॥३३॥
इति श्रीमदानन्दसुन्दरग्रन्थप्रशस्तिः स्वस्तिकारिणी सम्पूर्णा ॥
शिवमस्तु सर्वजगतः परिहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं सर्वत्र सुखी भवतु लोकः ॥
श्रीवरकाणापार्श्वः प्रसन्नो भूयात् ॥

संवत् १५४९ वर्षे कार्त्तिकवदि १२ दिने मण्डपाचलवास्तव्यमण्डपमहादुर्गे सुरताणग्याससाहविजयिराज्ये । श्रीपत्तनमध्ये वास्तव्यमोढज्ञातीयलेखकलक्ष्मीधरलिखितम् ॥

( केनचित् प्रान्ते लिखितम् — ) पं० जिणसूरियोग्य आनन्दसुन्दरग्रन्थः ॥

[ 4753 ]

[ श्लोकोऽयमन्यप्रतिभ्योऽधिको लभ्यते — ]

**अन्तः**— व्रजं जयरिपुलोकं पादपद्मानतः संगदित इति भवेन श्लाघितो देवसंघैः ।
निजगृहमथ गत्वा सादरं पाण्डुपुत्रो धृतजयलक्ष्मीर्धर्मसूनुं ननाम ॥४८॥

इति किरातार्जुनीये महाकाव्ये भारवेः कृतौ कल्याणसंपल्लाभो नामाष्टदशसर्गः समाप्तः । सं०१५२० वर्षे चैत्रसुदि ५ सोमे श्रीपूर्णिमापक्षे प्रधानशा० श्रीजयप्रभसूरिणा स्वयं लिखितम् ॥

**अव०अन्तः**— संवत् १५२२ वर्षे मु० जसतिलकेन पठनादनन्तरमवचूरिः कृता ॥

[ 4763 ]

**अन्तः**— संवत् गुहलपनद्विजनेता ग्रहमुनि(१६९७)मिते शुभे वर्षे ।
भाद्रपदशुद्धराकाशशिवारे चाभवत् पूर्णा ॥१॥

[ 4767 ]

**अन्तः**— ( अन्यदीयहस्तेनोल्लिखितेयं पुष्पिका — )

संवद् १८५३ मिते कार्त्तिकसुदि१३तिथौ श्रीवीकानेरनगरे वाचनाचार्यश्रीमदमृतधर्मगणिशिष्यवाचकक्षमाकल्याणगणेरुपदेशात् बोहरागोत्रीयसा०श्रीतिलोकसी-

पुत्रधर्मसीजी-तत्पुत्ररत्नचिरञ्जीविकर्पूरचन्द्रेण पुत्रकेवलचन्द्रसहितेन स्वश्रेयोर्थं ज्ञानवृद्ध्यर्थं च पुस्तकमिदं लेखयित्वा प्रदत्तम् ॥

[ 4775 ]

**अन्तः**— नलायनं नाम कुबेरपुराणं शुकपाठ इति । एवं दशमसर्गे श्लोक ५१ —एवं सर्वग्रन्थसंख्या ४७२४ श्रीमाणिक्यदेवसूरिकृतम् ॥

श्रीमत्यणहिल्लनाम्नि पत्तने सज्जनान्विते ।
श्रीमद्वृद्धतपागणनाथाः श्रीविज[य]धर्म्मसूरिवराः ॥१॥
तेषां पट्टे नित्यं विजयन्ते विजयरत्नसूरयो जगति ।
श्रीअभयसारविबुधा जाता मे श्रुतदायका गुरवः ॥२॥

संवत १५३६ वर्षे पं०विजयकीर्त्तिगणिनाऽलेखि ॥

[ 4778 ]

**आदिः**—महोपाध्यायश्री५सिद्धिचन्द्रगणिचरणकमलेभ्यो नमो नमः ॥
क्वान्यानि पुण्यानि पुराकृतानि क्वात्यन्तमुत्तुङ्गमनोरथा मे ।
तथापि ते श्लक्ष्णपदावलम्बी विश्वं वशीकर्तुमहं समीहे ॥१॥

**अन्तः**—इति श्रीनलोदयटिप्पणिकायां जडावबोधिन्यां चतुर्थोल्लासः ॥

संवत् १७०३ वर्षे मार्गशीर्षसितप्रतिपदि लिखितमेतच्छास्त्रम् । सकलवाचक-चक्रचक्रवर्त्तिवाचकश्रीसिद्धिचन्द्रगणिचरणसेविपं०रूपचन्द्रगणिना स्वशिष्यमुनितेजचन्द्र-वाचनकृते श्रीधवलकमहानगरे ॥

[ 4779 ]

**अन्तः**— संवत् १७६७ वर्षे भाद्रपदमासे कृष्णपक्षे अष्टमीतिथौ शुक्रवारे सकलभट्टारकपुरन्दरायमानभट्टारकश्रीश्री१०८श्रीविजयदानसूरिपरम्परायातः सकलपण्डित-शिरोमणिपण्डितश्रीप्रीतिविजयगणिशिष्यपण्डितश्री५श्रीभीमविजयगणिक्रमपङ्कजमधुव्रत-समेन श्रीमता पुण्यविजयपंन्यासजीकेन लिपीकृतमिदं नैषधमूलं द्वाविंशसर्गनिबद्धं लेखक-पाठक-वाचकानां मङ्गलं भवतु । लिखितं श्रीगुरुसाहाय्यात् । करकृतमपराधं क्षन्तुमर्हन्ति सन्तः गुरवो जयन्तु ।

[ मूल्यदातुर्ग्राहकस्य प्रशस्तिः ]

श्रीमत्पत्तनपत्तने प्रवरके ढंढेरके पाटके
गच्छे स्वच्छतरे क्रियागुणयुते श्रीपौर्णिमीयाभिधे ।
हैमव्याकरणादिशास्त्रनिचये पाण्डित्यभाजा भृशं
सूरिश्रीमहिमाप्रभाख्यसुगुरोः पट्टाम्बुजे भानुना ॥१॥

श्रीभावप्रभसूरिणा गणभृता खाङ्काश्व-भूवत्सरे ( १७९० )

क्रीतं नैषधकाव्यपुस्तकमिदं माघस्य पक्षे सिते ।

यत्नात् संयततो यशोविजयतो दत्त्वा द्विके रूपके

शिष्याणां पठनात् महामतिमतां सज्ज्ञानवृद्ध्यै सदा ॥ युग्मम् ॥२॥

लिखितं भ० श्री५श्रीभावप्रभसूरिभिः ॥

[ 4780 ]

**आदिः**—नत्वा श्रीनरसिंहपण्डितपितुः पादारविन्दद्वय

मातुश्चापि महाल्सेत्यभिधया विख्यातकीर्त्तिः क्षितौ ।

श्रीरामेश्वर-सीतयोः सुमनसोर्गुर्वोरगुर्वोर्यथा

बुद्धिः श्रीनिषधेन्द्रकाव्यविवृतं निर्माति नारायणः ॥५॥

प्रणम्य शङ्करं सोममनन्तं श्रीपतिसमम् ।

कुर्वे नाम्ना नैषधीयप्रकाशं सुहृदां मुदे ॥६॥

चिकीर्षितस्य निर्विघ्नसमाप्त्यर्थं शिष्टाचारपरिप्राप्तमाशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखमिति मङ्गलाचरणं कर्त्तव्यमिति ग्रन्थकृच्छ्रीहर्षनामा कविर्गूढसबीज-रघुनाथाभीष्टदेवतानमस्काररूपं मङ्गलमाचरति० ।

**अन्त**—इति श्रीवेदरखरोपनाम श्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीय-प्रकाशे षोडशः सर्गः ॥१६॥

[ 4781 ]

**अन्तः**—इति हर्षमिति । एककर्त्तृकत्वात् सुभगिन्याः छन्दस्य राजविशेषस्य सुसदृशि तुल्ये तद्भुवि श्रीहर्षचरिते सप्तदशानां पूरणः स्वभावसुन्दरसर्गः समाप्तः, छन्दस्य प्रशस्तिरपि । ग्रन्थो मया कृत इति सूचितम् । सौन्दर्याश्च तुल्या भवन्ति । छन्दप्रशस्तेरिति पाठे छन्दोबन्धक्रमस्वरूप[रूप]णपरस्य ग्रन्थस्येत्यर्थः । सप्तदश इति पूरणः इति लडट् । तद्भुवि भाषितपुंस्कम् ॥२२॥

इति शेषरामचन्द्रविरचितायां नैषधचरितभावद्योतनिकायां सर्वाऽनवद्यकारिण्यां सप्तदशः सर्गः समाप्तः ॥

संवत् १७५४ वर्षे कार्तिक वदि १३ वारसोमदिने श्रीपत्तने लेखकवृन्दा-वनेन लिपीकृतमिदम् ॥

[ 4784 ]

**आदिः**—यः साहित्यरसामृताब्धिलहरी जालेषु खेलाचलो

यश्चात्यर्थगभीरतर्कजलधेर्मथ्ये स मन्थाचलः ।

मीमांसायुगसिन्धुतारणविधौ यः कर्णधारः परः
केषामेष मनो विनोदयति न श्रीहर्षनामा कविः ॥४॥
सकलपदार्थविचारणकारणमतुलं स्वतः प्रकाशं(शकं)यत् [तत्] ।
महयामि महाभक्त्या नारायणनामकं किमपि ॥६॥
नारायणगुरुचरणप्रसादसंप्राप्तवाग्विलासेन ।
क्रियते नैषधटीका सुधिया शेषेण रामचन्द्रेण ॥७॥

**अन्तः**—इति श्रीरामचन्द्रविरचितायां नैषधचरितभावद्योतनिकायां सर्वानवद्यकरण्यां षोडशः सर्गः समाप्तः । श्रीबरहानपुरमध्ये जीवऋषिणा लिखितमिदं पुस्तकम् ॥

[ 4793 ]

**अन्तः**–[ विशिष्टश्लोकद्वयमिदम्—]
आद्यनामक्रमेणैवं प्रसर्पितगुरुक्रमे ।
पुनः श्रीजिनदेवाख्या बभूवुर्वरसूरयः ॥११॥
तेषां विनयविनयी बहुभावदेवसूरिः प्रसन्नजिनदेवगुरुप्रमोदात् ।
श्रीपत्तनाह्वयनगरे रवि-विश्ववर्षे(१४१२)पार्श्वप्रभोश्चरितरत्नमिदं ततान ॥१३॥

[ 4796 ]

**अन्तः**—आनन्दोदयपर्वतैकतरणेरानन्दमेरोर्गुरोः
शिष्यः पण्डितमौलिमण्डनमणिः श्रीपद्ममेरुर्गुरुः ।
तच्छिष्योत्तमपद्मसुन्दरकविः श्रीपार्श्वनाथाद्वयं
काव्यं नव्यमिदं चकार सरसालंकारसन्दर्भितम् ॥६६॥

इति श्रीमत्परापरपरमेष्ठिपदारविन्दमकरन्दसुन्दररसास्वादसंप्रीणितभव्यभव्ये पं०श्री-पद्ममेरुविनेयपं० श्रीपद्मसुन्दरविरचिते श्रीपार्श्वनाथमहाकाव्ये श्रीपार्श्वनिर्वाणमङ्गलं नाम सप्तमः सर्गः ॥७॥ नमः श्रीवाग्देवतायै ॥

[ 4797 ]

**अन्तः**—श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धुलब्धप्रतिष्ठवरवाचकरत्नचन्द्रः ।
श्रीकृष्णपुत्रचरितं ललितं चकार सर्गोऽत्र सप्तदशमान इहाप पूर्त्तिम् ॥१७७॥

इति दिल्लीदेशे फतेपुरस्थैः पातिसाहिश्रीअकब्बरैः श्रीगुरुदर्शनार्थसमाहूतभट्टारक-श्रीहीरविजयसूरीश्वरैः सह विहारकृतां स्वयंकृतकृपारसकोशग्रन्थश्रावणरञ्जितपातसाहि-श्रीअकब्बराणां श्रीहीरविजयसूरिनाम्ना कारितजीजियाकरनिवारणस्फुरन्मानानां तथा-कारितषाण्मासिकजीवाभयदानस्फुरन्मानानां पातसाहश्रीअकब्बरदापितोपाध्यायपदानां श्रीजम्बूद्वीपप्रज्ञप्त्युपाङ्गस्य प्रमेयरत्नमञ्जूषानाम्न बृहद्वृत्तिकृतां महोपाध्याय-

श्रीशान्तिचन्द्रगणीमहेन्द्राणां शिष्यमुख्योपाध्यायश्रीरत्नचन्द्रगणिभिर्विरचिते। श्रीभक्तामरस्तव १—कल्याणमन्दिरस्तव २ -श्रीदेवाप्रभोस्तव—श्रीमन्धर्मस्तव—ऋषभवीरस्तव-श्रीकृपारस-कोश-श्रीअध्यात्मकल्पद्रुम-श्रीनैषधमहाकाव्यवृत्तिभगिनीनां लघुसहोदरे श्रीसम्यक्त्वसप्तति-प्रकरणस्य श्रीसम्यक्त्वरत्नप्रकाशनामबालावबोधस्य श्रीसमवसरणस्तवबालावबोधस्य वृद्धबान्धवे श्रीप्रद्युम्नचरिते महाकाव्ये बलदेवदीक्षा-तपःसाधनपञ्चमस्वर्गगमनश्रीनेमि-निर्वाणप्रद्युम्न-शाम्बादिकेवलज्ञान-मुक्तिगमनवर्णनो नाम सप्तदशः सर्गः सम्पूर्णः । तत्समाप्तौ च सम्पूर्णं श्रीप्रद्युम्नचरितं नाम महाकाव्यम् । अथ प्रशस्तिर्लिख्यते—

श्रीवीरशिष्यो गणभृत्सुधर्मा श्रीद्वादशाङ्गीसमलब्धमर्मा ।
श्रीमत्तपागच्छमहाद्रुमूलमासीद् भवाम्भोनिधियानपात्रम् ॥१॥
आसीद् गुरुस्तस्य परम्परायां साधुक्रियामार्गविकाशभास्वान् ।
आनन्दपूर्वो विमलाप्रसूरि[:] बुद्ध्या समानीकृतदेवसूरिः ॥२॥
तत्पट्टगगनरत्नं सूरिश्रीविजयदानसूरिवरः ।
आसीद् भाग्यनिधानं गुणगणनिलयः क्रियापात्रम् ॥३॥
श्रीहीरविजयसूरिस्तत्पट्टवैभूषणं प्रशमसदनम् ।
आसीन्नरपतिराशि[:] प्रणतशिरोमौलिरत्नकृतचर्चः ॥४॥ गीत्यार्या ॥
तस्यापि शिष्यरत्नं स्वस्तिश्रीविजयसेनसूरिवरः ।
आसील्लब्धिमहाब्धिः शमरसपात्रं जगद्विदितः ॥५॥
तत्पट्टवंशमुक्तामणिरिव तेजस्वितादिगुणयुक्तः ।
श्रीविजयदेवसूरिः शास्ताऽस्तितमां तपगणे सुगुणाः ॥६॥
य[:] सौभाग्यगुणेन स्मारयतितमां च शीलगुणयोगात् ।
जम्बूस्वामिनमुच्चैर्जयतात् श्रीविजयदेवसूरिगुरुः ॥७॥
श्रीआनन्दविमलगुरुशिष्या[:] श्रीसहजकुशलविबुधवराः ।
सिद्धान्तहेमनिकषा बभूवुरुद्दामगुणनिवहाः ॥८॥
तेषां शिष्या मुख्या वाचकवरसकलचन्द्रनामानः ।
येषां गिरं सुधामिव निपीय भव्याः प्रमोदन्ते ॥९॥
श्रीशान्तिचन्द्रा वरवाचकेन्द्रा बभूवुरब्जप्रतिवीरवक्त्राः ।
शिष्येषु मुख्या बहुषु प्रवीणास्तेषां गुरूणां गुणभाजनानाम् ॥१०॥
श्रीमज्जम्बूद्वीपप्रज्ञप्तेर्वृत्तिरत्नसवितारः ।
श्रीमत्साहिअकब्बरभूपतिपर्षत्सु लब्धबहुमानाः ॥११॥ गीत्यार्या ॥

श्रीमज्जैनप्रवचनप्रभावनाकृत्यकरणविधिदक्षाः ।
आसन् विद्यादानैः शिष्याणां भूयसां च पूज्यतमाः ॥१२॥
गीत्यार्यायुगलम् ॥

तेषां गुरूणां गुणसागराणां प्रसादलेशं समवाप्य चक्रे ।
अभ्यर्थितः शिष्यगणैर्विनीतैर्वृत्तोत्तमः वाचकरत्नचन्द्रः ॥१३॥

कृत्वा कृपां मयि बुधैः [ खलु ] शोधनीयं संशोध्य वीतकलुषं परिवाचनीयम्।
अन्योपकारविधये च सुलेखनीयं शिष्यादिपाठनपरैः परिशीलनीयम् ॥१४॥

युग-मुनि-रस-शशि( १६७४ )वर्षे आश्विने विजयदशमीकादिवसे ।
वारे विधौ च विदधे वाचकवररत्नचन्द्र इति चरितम् ॥१५॥
त्रिसहस्राः पञ्चशती पुनरेकोनसप्ततिः ।
श्लोकानामिह सर्वाग्रं वर्णाः षोडश चाधिका ॥१॥ ग्रन्थाग्रन्थ ३५६९, वर्ण्ण १६ ।

सूर्याचन्द्रमसौ यावत् यावत् सप्तधरा धराः ।
यावत्तपागणस्तावदयं(दिदं ) जयतु पुस्तकम् ॥१॥

नन्द-बाणाङ्क-भूमिते ( १९५९ ) संवत्सरे फाल्गुनकृष्णत्रयोदश्यां गुरुवासरे ॥

[ 4799 ]

**अन्तः**— आनन्दोदयपर्वतैकतरणेरानन्दमेरोर्गुरोः
शिष्यः पण्डितमौलिमण्डनमणिः श्रीपद्ममेरुर्गुरुः ।
तच्छिष्योत्तमपद्मसुन्दरकविः सन्दब्धवांस्तन्महा-
काव्यं श्रीयदुसुन्दरं सहृदयानन्दाय कन्दायताम् ॥८९॥

इति श्रीमत्तपागच्छनभोनभोमणिपण्डितोत्तमश्रीपद्ममेरुविनेयपं०श्रीपद्मसुन्दरविरचिते यदुसुन्दरनाम्नि महाकाव्ये सन्ध्योपश्लोकमङ्गलशस( लरच )नो नाम द्वादशः सर्गः ॥१॥
समाप्तं चेदं यदुसुन्दरनाम महाकाव्यम् ॥

[ 4801 ]

**अन्तः**— इति भट्टारकजिनचन्द्रसूरि-शिष्यआचार्यश्रीजिनसमुद्रसूरिविरचिते रघुकाव्यान्वयमात्रे वंशप्रतिबन्धो नाम एकोनविंशतितमः सर्गः ॥१९॥

अथ संवत्सराष्टादशशत-चतुर्विंशतौ भाद्रपदे शुक्लपक्षे त्रयोदश्यां रविदिने चातुर्मासे पट्टालयनामनगरे राघवो टीका सम्पूर्णा लिख्यते ॥

[ 4806 ]

**अन्तः**— इति कालिदासकृतौ श्रीरघुवंशे महाकाव्ये राजप्रतिष्ठासंधानो नामैकोनशितमः सर्गः । विनयप्रभपठनार्थम् । ग्रन्थाग्रम् २१०० समाप्तमिति प्रथमं वैवस्वतं

नाम—दिलीप १—रघु २—अज ३—दशरथ ४—श्रीराम —५कुश ६—अतिथि ७—निषधः ८, नल ९—नभः १०, पुण्डरीकः ११, क्षेमवध्र १२—देवानिकः १३, अहीनगु १४—पारियात्र १५—बलः १६, शील ७—उन्नाभ १८—वज्रनाभः १९, खण्डनः २०, अध्युषिताश्व २१, विश्वसह २२—हिरण्यनाभः २३, कौशल्यः २४, ब्रह्मिष्ठः २५—पुष्प २६—ध्रुवसंधिः २७, सुदर्शिनः २८, अग्निवर्णः २९—इति रघूणां नामानि । श्रीसङ्घस्य — — — —दरसूरिवराणाम् ॥श्री॥

[ 4810 ]

**अन्तः**—इति श्रीवाचनाचार्य्यसुमतिप्रभगणि-शिष्यधर्म्ममेरुविरचितायां रघुकाव्य-टीकायां वंशप्रतिषेधराज्ञीराज्यनिवेशो नामैकोनविंशतितमः सर्गः ॥१९॥

संवत् १७५३ वर्षे फाल्गुनमासे शुक्लपक्षे पूर्णिमागुरुवासरे श्रीवीरमग्रामे । श्रीश्रीमद्राजविजयसूरीश्वर-तत्पट्टे तपागच्छाधिराजश्रीरत्नविजयसूरीश्वर-तत्पट्टे भट्टारकश्री-५श्रीहीररत्नसूरीश्वर-तत्पट्टे भट्टारकश्री५श्रीजयरत्नसूरिचरणेन्दीवरेभ्यो नमः । तत्पट्टे श्रीभावरत्नसूरीश्वरेण श्रीवीरमग्रामे रघुकाव्यटीका लिखिता स्वकीयशिष्यसाधुपठनार्थम् ।

[ 4813 ]

**आदिः**—श्रीसर्वज्ञजिनं नत्वा गणिः समयसुन्दरः ।
अर्थलापनिकां वृत्तिं करोति सुगमां रघोः ॥१॥

**अन्तः**—रघुवंशे महाकाव्ये कृता समयसुन्दरैः ।
अर्थलापनिका वृत्तिः सर्गैकोनविंशके ॥१॥
रघुवंशस्य काव्यस्य बहवः सन्ति वृत्तयः ।
परं ता दुर्घटाः सर्वाः सुतरामतिविस्तराः ॥२॥ मया स्वप० ।

[ अतोऽपूर्णयं प्रशस्तिः ]

[ 4814 ]

**अन्तः**— इति द्विसन्धानमहाकाव्ये राघवपाण्डवीये अपरनाम्नि षट्तर्क-चक्रवर्त्तिना द्विसन्धानकविना धनञ्जयेन विरचिते अष्टादशमः सर्गः सम्पूर्णः समाप्तः ।

[ अन्यदीयहस्तेनोल्लिखितम् - ]

संवत् १५४८ वर्षे चैत्रसुदि १३ श्रीमूलसङ्घे बलात्कारगणे सरस्वतीगच्छे भट्टारकश्रीपद्मनन्दिदेवास्तत्पट्टे भट्टारकश्रीशुभचन्द्रदेवास्तत्पट्टे भट्टारकजिनचन्द्रदेवास्तदा-म्नाये षण्डेलवालान्वये वैद्यगोत्रे साधुतोल्हा—तत्पुत्रपण्डिताचार्यश्रीपण्डितपद्मातत्पुत्र-पं०वींझासुरजन—एतैरिदं पुस्तकं लिखाप्य ब्रह्मदेवराजाय दत्तम् । तथा राज्ये श्रीमहु-याससाहिनृपतेः श्रीमदाह्लादनपुरे चेति शेषम् । श्रीश्रीअमरकीर्त्तिः ॥

[ 4816 ]

[ अन्यदीयहस्तेनोल्लिखितः— ]

श्रीपूज्यजीश्रीमाणिकन्दजी-तत्‌शिष्यऋषिचतुरचन्द-श्रीमांडवीना भंडारमें प्रत मूकी छे। सं० १८५८ ना कार्त्तिक शुदि १५ गुरौ ।

[ 4818 ]

**अन्तः**—श्रीवासुपूज्यचरितं परिपूर्णमेतदाह्लादनं सततमन्तरनुस्मरन्तः ।
रोमाञ्चरम्यमहसः सह सर्वदेवैः स्थानं ययुर्निजनिजं जयिनः सुरेन्द्राः ॥६९॥
युग्मम् ॥

इति दण्डाधिपतिश्रीमदाह्लादनसमभ्यर्थितश्रीविजयसिंह-शिष्यश्रीवर्द्धमानसूरिविरचिते श्रीवासुपूज्यचरिते आह्लादनाङ्के महाकाव्ये महोदयलब्धिवर्णनो नाम चतुर्थः सर्गः । ग्रन्थाग्रन्थ १३६९, उभय ५४५१। सम्पूर्णमिदं भूर्भुवःस्वस्त्रयीपूज्यश्रीवासुपूज्यचरितम् ॥ श्रीनागेन्द्रमुनीन्द्रगच्छतिलकः श्रीवीरसूरिर्बभौ यस्माद् बोधमवाप्य मण्डलपतिर्जज्ञे यतिश्चाचिगः। तच्छिष्यः परमारवंशविशदः श्रीवर्द्धमानप्रभुस्तत्पट्टोदयपर्वतैकतरणिः श्रीरामसूरिस्ततः ॥१॥

चन्द्रः कुवलयोद्‌बोधे चन्द्रसूरिरभूद् गुरुः ।
ततः शमसुधाम्भोधिर्देवसूरिर्मुनीश्वरः ॥२॥

बभूवाभयदेवाख्यः सूरिर्भूरिगुणोद्धुतः ।
श्रीहेमसूरिर्येद्वाख्यां व्याचख्यौ भूभुजा समम् ॥३॥
श्रीमान् धनेश्वरः सूरिरथाजनि मुनिप्रभुः।
रूपे वचसि च प्राप जयपत्रं जनेषु यः ॥४॥
गुरुर्विजयसिंहोऽभूत् यश्चक्रे प्रियमेलकम् ।
सर्वत्र स्वसरस्वत्या विद्वज्जनमनोऽम्बुधौ ॥५॥
निस्तन्द्रोऽजनि देवेन्द्रसूरिर्यन्मुखमण्डपे ।
विललास कवित्वश्रीः सार्कं वक्तृत्वसम्पदा ॥६॥
सूरेर्विजयसिंहस्य शिष्यो गुर्वाज्ञया ततः ।
सूरिः श्रीवर्द्धमानोऽस्मिन् गच्छे यामिकतां दधौ ॥७॥
उदयाद्रिरिव श्रीमान् स नन्द्यादुदयप्रभः ।
यत्रोदयी वचोभानुर्भव्याम्भोजानि भासयेत् ॥८॥
अस्मिन् गुरुक्रमे भक्तः श्रीगल्लककुलेऽभवत् ।
वाधूर्व्याधूतदुःकर्म्मा धर्माम्बुधिविधुः सुधीः ॥९॥

योऽकारयन्महावीरचैत्यं संगमखेटके ।
तस्मै हलशतक्षोणीं चतुर्वाटीयुतां ददौ ॥१०॥
तद्भूरभूदथोन्मर्दी कपर्दी येन कारितः ॥
चैत्यं युगादिदेवस्य ग्रामे वटसरो( रा )भिधे ॥११॥
तत्पुत्र आम्रदेवोऽभूदाम्रवन्मङ्गलास्पदम् ।
राणुका गेहिनी तस्य पुण्यश्रीरिव देहिनी ॥१२॥
तत्सूनुर्देवचन्द्रोऽभून्निस्तन्द्रो धर्म्मकर्म्मणि ।
पद्मिनी पद्मिनीवास्य प्रिया शीलश्रियो गृहम् ॥१३॥
चत्वारो जज्ञिरे विश्वनन्दना नन्दनास्तयोः ।
भव्यजीवमनःशुद्ध्योर्धर्मभेदा इवाङ्गिनः ॥१४॥
तेषु ज्येष्ठोऽजनि श्रीमान् अम्बडः सचिवाग्रणीः ।
अद्वितीयो विवेकेन द्वितीयो जह्लणस्ततः ॥१५॥
श्रीमदाह्लादनो जातिमण्डनं दण्डनायकः ।
मन्त्री धर्मधुराधुर्यस्तुर्यः प्रह्लादनः पुनः ॥१६॥
एभ्यः स्वर्गश्रियं प्राप्ते श्रीमदम्बडमन्त्रिणि ।
विशेषाद् धर्म्मधुर्यत्वमाह्लादनसुधीर्दधौ ॥१७॥
यत्कीर्त्तिव्रततिस्थारापद्रस्थानकसम्भवा ।
न्यायधर्मामृतैः सिक्ता विस्तृता विश्वमण्डपे ॥१८॥
यः श्रीसत्यपुरे वीरप्रासादे नाभिनन्दनम् ।
थारापद्रे च नाभेयचैत्ये श्रीपार्श्वनायकम ॥१९॥
तथा चन्द्रप्रभस्वामि-सीमन्धर-युगन्धरान् ।
अम्बिका-भारती-मूर्तीर्दिव्यस्फूर्तीर्व्यधापयत् ॥२०॥ युग्मम् ॥
नाभीपद्मे यथात्मानं योगी ध्यायत्यहर्निशम् ।
पद्मकोशे तथा योऽयमादिनाथं स्वकारितम् ॥२१॥
ग्रामे वटसरो( रे ) नाम्नि तथा संगमखेटके ।
येनोदध्रे समं पूर्वैश्चैत्यद्वन्द्वं जिनान्वितम् ॥२२॥
अणहिल्लपुरीलक्ष्म्यास्तिलकं श्रेयसां निधिः ।
स्वगुरोर्वसतिर्येनोदध्रे भक्तिशुभात्मना ॥२३॥
केवलत्यमलज्ञानदानभृत् पुस्तकानि यः ।
अगण्यपुण्यलक्ष्म्याप्त्यै शासनानीव सर्वदा ॥२४॥

प्रासादः शुशुमे येनो[ द् ]धृतः श्रीवासुपूज्ययुक् ।
पत्तनस्य पुरो राज्ञो रत्नवानिव शेखरः ॥२५॥
अमेयं स्पृहयन् श्रेयः श्रीमदाह्लादनो गुरुम् ।
श्रीवर्द्धमानसूरिं स भक्त्याभ्यर्थितवानिति ॥२६॥
जीर्णोद्धार इहाणहिल्लनगरे श्रीवासुपूज्यप्रभोः
प्रासादस्य मयाऽभवद् वचनतः स्वश्रेयसे कारितः ।
यूयं तच्चरितस्य पुण्यघटनां कुर्यात जीर्णोद्धृतिं
कृत्येऽस्मिन्निपुणा यतो गणधराः स्युः सूत्रधारा ध्रुवम् ॥२७॥
ततोऽसौ निधि-निध्यर्के( १२९९ )सङ्ख्ये विक्रमवत्सरे ।
आचार्यश्चरितं चक्रे वासुपूज्यविभोरिदम् ॥२८॥
चतुरा वाचयन्त्वेतद् बुधा व्याख्यानयन्त्वपि ।
शब्द-प्रमाण-साहित्यागमज्ञाः शोधयन्तु च ॥२९॥
यावत् पूर्वाङ्गणेऽस्मिन्नसमतमतमो गोमयालेपनार्द्रे
सायं सन्ध्यापुरन्ध्री स्फुरदुडुकुसुमे मुञ्चतीन्दुप्रदीपम् ।
प्रातः श्रीः सान्ध्यरागस्फुरदुरुघुसृणे भानुकुम्भं च तुष्टचै
धर्माधीशस्य तावज्जिनचरितमिदं संघलोके मुदे स्तात् ॥३०॥
सकलाक्षरगणनायां जयति श्रीवासुपूज्यचरितमिदम् ।
वेद-निधि-वेद-बाणानीता(५४९४)ङ्कग्रन्थसम्पूर्णम् ॥३१॥
अङ्कतोऽपि सर्वसङ्ख्या ग्रन्थश्लोक ५४९४ ॥

संवत् १९४४ के माघ वद ८ शुक्करवार । लिपीकृतं श्रीबीकानेरनयर-मध्ये । प्रोयत प्रभुबाहरलीपर्यायां सहित श्लोकग्रन्थ वासुपूज्यचरित्र छै ।

[ 4821 ]

**अन्तः–** इत्याचार्यश्रीअजितप्रभसूरिविरचिते श्रीशान्तिचरित्रे द्वादशभाववर्णनो नाम षष्ठः प्रभावः । श्रीशान्तिनाथचरित्रं सम्पूर्णम् ॥

इति श्रीतपागच्छे षष्ठितमपट्टोदयगिर्युदीयमानभानुसमानभट्टारकपुरन्दरश्रीविजय-देवसूरीश्वरविजयमानराज्ये पातसाहश्रीअकब्बरमहाराजाधिराजैर्दर्शनार्थं दिल्लीदेशस्थ-फतेपुरे समाकारितसकलभट्टारकचक्रचक्रवर्तिअष्टपञ्चाशत्तम(५८)पट्टप्रभाकरश्रीहीरविजय-सूरिभिः सह विहारिणां कृपारसकोशाभिधाननवीनग्रन्थकरण-तत्श्रा( श्र )वण-रञ्जितपातसाहिचित्तानां श्रीहीरविजयसूरिनाम्ना कारितषाण्मासिकजीवाभयदान-स्फुरन्मानानां कारितसकलदेशसत्कजीजीयाकरनिवारणस्फुरन्मानानां च महोपाध्याय-

श्रीसकलचन्द्रगणि-पट्टोदयाचलभानुसमानानां श्रीमज्जम्बूद्वीपप्रज्ञप्त्युपाङ्गप्रमेयरत्नमञ्जूषा-नामबृहद्वृत्तिकृतां सकलदेशकरनिवारणेन सकलदेशलोकोपकारकृतां अनेकप्राज्ञ-शिष्यपाठनलब्धयशसां पातसाहिश्रीअकब्बरसार्वभौमैः श्रीहीरविजयसूरिहस्तेन दापितो-पाध्यायपदानां महोपाध्यायश्रीशान्तिचन्द्रगणिवराणां शिष्योत्तमैः भक्तामरस्तव-कल्याण-मन्दिरस्तव-देवा प्रभोस्तव-श्रीमन्धर्मस्तव-श्रीकृपारसकोश-श्रीऋषभ-वीरस्तव-श्रीअध्यात्म-कल्पद्रुम-श्रीनैषधमहाकाव्य-श्रीरघुवंशमहाकाव्य९—वृत्तिकरणलब्धयशोवादैस्तथाश्रीप्रद्युम्न-चरित्रकरण-श्रीसम्यक्त्वसप्ततिकाप्रकरण-सम्यक्त्वरत्नप्रकाशनामबालावबोधकरणलब्धपुण्य—प्राग्भारैर्महोपाध्यायश्रीरत्नचन्द्रगणिभिः ।

संवत् १६७७ वर्षे चैत्रासितद्वितीयादिवसे श्रीघनद्वीपिकायां नगर्यां लिखितं श्रीमत्शान्तिनाथचरित्रं गणिगणशिरोमणिग०मानचन्द्रपठनार्थम् ॥ ग्रन्थाग्रम् ४९११ वाच्यमानं चिरं जीयात् ॥

[ 4826 ]

**अन्तः**— इति शान्तिनाथचरित्रं समाप्तमिति । सूत्रसङ्ख्या ५००० श्लोक ॥

संवत् १८२८ वर्षे शा०१६९३ प्रवर्तमाने पौषमासे श्रीकृष्णपक्षे तृतीयातिथौ श्रीगुरुवासरे कच्छदेशे बाहुदङ्गे पूज्यऋषिश्री ५ पदमसीजी-तत्शिष्य पूज्यऋषिश्री ५ चन्द्रभाणजी-तत्शिष्यलिखितं ऋ०वस्ता स्वयमेव वाचनार्थम् ॥

**स्त०अन्तः**— संवत् १८२८ वर्षे शाके १६९३ प्रवर्तमाने फाल्गुनमासे शुक्लपक्षे पूर्णमासीतिथौ श्रीबुधवासरे महत्पूज्यऋषिश्रीश्री७पदमसीजी-तत्शिष्यपूज्य-ऋषिश्री५चन्द्रभाणजी-तत्शिष्यलिखितं ऋ०वस्ता स्वयमेववाचनार्थं लिखितम् । श्रीकच्छदेशे भुजदङ्गे चोमासो कीधूं छै ।

[ 4827 ]

**मू०अन्तः**—इति श्रीशान्तिनाथचरित्रसूत्रार्थः समाप्त इति ॥

संवत् १८४७ वर्षे मासोत्तमनभोमासे शुक्लपक्षे १० तिथौ गुरुवासरे पं० हेमविजयः लिपीचक्रे श्रीकुअरग्रामे ।

**स्त०अन्तः**—इति श्रीशान्तिनाथचरित्रसूत्रार्थः समाप्तः । ग्रन्थाग्रन्थ २१४३५ ।

संवत् १८४७ वर्षे शाके १७१२ ना माघशुदि ६ बुधे प्रथमप्रहरे सम्पूर्ण लिपीचक्रे श्रीवीरप्रसादात् कुअरग्रामे वढीआरदेशे ।

श्रीशान्तिचरित्रकी, परति लखी कुंअरग्राम ।
जेसी थी तेसी लिखी, वांक हमारा नांहि ॥१॥

जीहां लगि सूरगिरि रहें, जिहां लगि सूरज चंद ।
तिहां लग ए पुस्तिका, वांचो सुगुण सुरिंद ॥३॥
जीहां लगें प्रथवी वसें, जीहां लगे धर्म पवित्र ।
तिहां लगे ए पुस्तिका, वांचो सुगुण सुमित्र ॥४॥

[ 4828 ]

**आदिः**—एकामपि त्रिरूपां यो जगत्त्रियगोचरे ।
चारयामास जनीं गां गौतमः स तमश्छिदे ॥८॥
श्रीसुधर्मा सुधर्म्मश्रीवीरवंशसमुद्भवः ।
तरोर्महान्तरारातिपातने तनुतां मम( ? हः ) ॥९॥
चतुर्द्दशमितापूर्व्वपूर्व्वरत्नकुलाश्रयः ।
विश्वरूपं दधन्मध्ये श्रुतवार्द्धिः प्रवर्द्धताम् ॥१०॥
चतुर्दशशतग्रन्थप्रथनायासलालसम् ।
हारिभद्रं वचो हारि भद्रं भद्रं करोतु नः ॥११॥
वादविद्यावतोऽद्यापि लेखशालामनुज्झता ।
देवसूरिप्रभोः साम्यं कथं स्याद् देवसूरिणा ॥१२॥
वन्दे श्रीदेवचन्द्रं तं यत्कृतं प्राकृतं बृहत् ।
श्रीशान्तिवृत्तं संक्षिप्य संस्कृतं क्रियते मया ॥१३॥
अमानं महिमानं कस्तस्य स्तौतु गणेशितुः ।
शिष्यो यस्योदितो हेमचन्द्रसूरिर्जगद्गुरुः ॥१४॥
नृपतिप्रतिबोधिन्या यद्गिरा सुधयाऽमराः ।
जज्ञिरे पशवोऽपि श्रीहेमसूरिं महेम तम् ॥१५॥
श्रीदेवानन्दसूरिभ्यो नमस्तेभ्यः प्रकाशितम् ।
सिद्धसारस्वताख्यं यैर्निजं शब्दानुशासनम् ॥१६॥
श्रीदेवानन्दशिष्यः श्रीकनकप्रभसूरिराट् ।
श्रीप्रद्युम्नश्चिरं नन्द्याद् ग्रन्थस्यास्यापि शुद्धिकृत् ॥१७॥

**अन्तः**—बार्हस्पत्याधिपत्यस्य पातने प्रथितोद्यमः ।
अपूर्वः कोऽपि लोकेऽस्मिन् देवसूरिकृतोदयः ॥४०३॥
यो वादीश्वरदेवसूरिसुगुरोर्मूलक्रमे सूरिणा
चक्रे श्रीमदनेन्दुना निजपदे तेनाग्रवृत्तिः श्रिता ।

काव्ये श्रीमुनिदेवसूरिकविना श्रीशान्तिवृत्ते कृते

श्रीप्रद्युम्नमुनीन्दुधी रुचिशुचिः सर्गोऽगमत् सप्तमः ॥

प्रभाधिनाथैर्मुनिभिः कलाभृन्मुख्यैरुपेतो गुरुतारकाद्यैः ।
अनन्तलीलाकलितः किलास्ते गच्छो बृहद्गच्छ इति प्रतीतः ॥१॥
तत्र चित्रचरितः परितापं हर्तुमब्द इव भव्यजनानाम् ।
सस्यवृद्धिकरसंवरदानेऽप्युज्ज्वलोऽजनि गुरुर्मुनिचन्द्रः ॥२॥
दुःषमाजलधौ येन मग्ना सुविहितस्थितिः ।
हेलयैव समुद्दध्रे धरित्री वादिपोत्रिणा ॥३॥
श्रीजैनशासनसरोजविकाशभानुः श्रीदेवसूरिरिति तस्य बभूव शिष्यः ।
दुर्वादिकौशिकचयप्रतिभाद्दगान्ध्यं यो वाग्मरीचिनिचयै रचयाञ्चकार ॥४॥
येषां दूरीकृतया कीर्त्या बलयापि कुमुदचन्द्रस्य ।
विदधे विजयस्तज्जयमहिमा को नाम तेषां स्यात् ॥५॥
तद्भद्रासनविन्ध्यभूभृति यशः श्रीपूर्वगङ्गावृति

श्रीभद्रेश्वरसूरयः समभवन् भद्रेभशोभाभृतः ।
यैः प्रज्ञाप्रसरेण शास्त्रगहनं संशोध्य दुःसंचरं

शिष्याणां मतयः करेणव इव प्रौढप्रचाराः कृताः ॥६॥
तत्पट्टेऽभयदेवस्य प्रभोः कल्पद्रुकल्पताम् ।
तथैव कथयत्येषा प्ररूढा रत्नमञ्जरी ॥७॥
सूरिर्मदनचन्द्राख्यो मुख्यो मार्दवशालिनाम् ।
तत्पट्टमुकुटो रेजे शिष्यरत्नैः समुज्ज्वलैः ॥८॥
मत्वा च्छिन्ने येन नाम्नी स्वकीये लज्जासज्जौ पुष्पचापद्विजेशौ ।
जातौ मन्येऽमुष्य कर्तुं विरुद्धान्येकोऽनङ्गः कृश्यदङ्गः परोऽभूत् ॥९॥
तत्पट्टे कविशेषको गणभृतः प्रद्युम्नतः शिक्षित-

स्तन्बन्धोर्जयसिंहसूरिसुगरोर्योगादिनिष्णातधीः ।
शास्त्रेषु प्रचितो मनीषिभवनात् पद्माकरेणैधितः

काव्यं श्रीमुनिदेवसूरिरचितं श्रीशान्तिवृत्तं नवम् ॥१०॥
द्वि-द्वि-त्र्यैकसमासु ( १३२२ ) मासि सहसि श्वेतद्वितीया बुधै-

र्द्वैधाऽप्यत्र यदाश्रयं श्रितवता काव्यं मयेदं कृतम् ।

श्रीप्रद्युम्नसूरीश्वरः सविशदं सद्यः प्रसद्य व्यधाद्
ज्ञैरन्यैरपि शोधनीयमसमं धृत्वा ममत्वं मयि ॥११॥

प्रत्यक्षरं च सङ्ख्यानात् पञ्चपञ्चशताधिका ।
अस्मिन्ननुष्टुभामष्टचत्वारिंशत्शती ध्रुवम् ॥१२॥ ग्रन्थाग्रम् ४८५५ ॥

उदकानलचौरभ्यो मूषकेभ्यो विशेषतः ।
रक्षणीया प्रयत्नेन यतः कष्टेन लिख्यते ॥१॥

संवत् १४७२ वर्षे शाके १३३८ प्रवर्त्तमाने प्र० ज्येष्ठ वदि भौमे ज्येष्ठा-नक्षत्रे सिद्धियोगे कौलवकरणे पिप्पलाचार्यश्रीशान्तिसूरिसंताने श्रीजिनेश्वरसूरयः । तत्पट्टभारधौरेयाः श्रीशावदेवसूरयः । पट्टे श्रीललितप्रभसूरयः । पट्टे श्रीअमरचन्द्रसूरयः ।

तत्पट्टसंयमिनां धुर्याः श्रीरत्नसिंहसूरयः ।
अमीषां गु(? तद्गु)णवन्तानां(? वतां) श्रीभावदेवसूरयः ॥
तस्य पट्टोदयगिरौ बालमार्त्तण्डसन्निभः ।
श्रीवीरसिंहसूरीन्द्रो गुणैर्विजयतेऽधुना ॥२॥
[ . . . ] श्रावकस्तेषां गुरूणां जातवासनः ।
ददौ निदानं पुण्यस्य पुस्तकं नतमस्तकः ॥३॥
राजहंसाविमौ यावच्चरतोऽत्र नभोऽङ्गणे ।
वाच्यमानं गणधरैः तावन्नन्दतु पुस्तकम् ॥४॥

[ अन्यदीयाक्षरैस्तावदयमुल्लेखः— ]

श्रीआञ्चलगच्छधि[च्छाधिरा]जश्रीश्री ॥

[ 4829 ]

**आदिः**—यस्य भृङ्गावली कण्ठे दानाम्भोराजिगजिते ।
भाति रुद्राक्षमालेव स वः पायाद् गणाधिपः ॥१॥
अभीष्टफलं सम्पत्तिहेतुं स्मृत्वा सरस्वतीम् ।
शिशुपालवधे काव्ये सारटीकां विधीयते ॥२॥

**अन्तः**— इति श्रीशिशुपालवधे महाकाव्ये अङ्के आनन्ददेवायनिश्रीवल्लभदेव-विरचितायां सन्देहविषौषध्यां सारटीकायां शिशुपालवधो नाम विंशतिमः सर्गः ॥२०॥ समाप्तमिदं शिशुपालवधाभिधानं महाकाव्यम् ॥

सूनुरानन्ददेवस्य रणभूत्योर्मतस्य च ।
व्यधत्त टीकां काव्येऽस्मिन् वल्लभः सूरिवल्लभाम् ॥१॥

विवरणमन्यद् दृष्ट्वा बुधैस्ततो ज्ञास्यते विशेषात् ।
प्रायेण येन भुक्तं तद्वज्जानीयात् कुतो विशेषज्ञः ॥२॥

इति श्रीआनन्ददेवायनिवल्लभविरचिते **माघ**भाष्ये वंशविवरणं समाप्तम् ।

संवत् १७५३ वर्षे भाद्रपदसुदि १० गुरुवासरे अद्य श्रीमदणहिल्लपत्तने लिपीकृतमिदं पुस्तकम् ।

[ 4831 ]

**अन्तः**–सूनुरानन्ददेवस्य रणभूम्यामभास्वतः ।
व्यधत्त काव्येऽस्मिन् टीकां वल्लभः सूरिवल्लभाम् ॥१॥
विवरणमन्यद् दृष्ट्वा बुधैस्ततो ज्ञास्यते विशेषोऽत्र ।
येन ननु वल्लभी[--]स कुतो ह्यशेषज्ञः ॥२॥
श्लोकानामवमन्येथाः सहस्राणि दशैव हि ।
मूलग्रन्थस्य सहस्रे द्वे तथैव च ग्रन्थाग्रम् ॥३॥
अनुष्टुप्च्छन्दसां श्लोक १२००० । द्वादशसहस्राः ।
शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं सर्वत्र सुखीभवतु लोकः ॥
संवत् १५५० वर्षे कार्त्तिकशुदिनवमी शनौ पुस्तिकेयं लिलेख ।

[ पश्चात्कालीनोऽयमुल्लेखः-- ]

**माघ**काव्य मुनिचारित्रविजेजीका ।

[ 4834 ]

**आदिः**—वाचो वः पान्तु नित्यं मधुकरनिकरश्यामलाः श्रीकटाक्षाः
कालिन्दीभृङ्गयुक्तासितनलिनयुतक्षीरकल्लोलकल्पाः ।
स्फूर्जन्नीलेन्द्ररत्नद्युतिभरसदृशः शोभयन्तः सदास्यं
कुर्वन्तः खञ्जरीटं निजरुचिरहितं स्वप्रभाभिर्वराभिः ॥१॥
स्मृत्वा श्रीश्रुतदेवतां सुमनसां वारैर्नतांह्रिचर्यां(?)
कण्ठे दाम मनोहरं सुमनसां नित्यं वहन्तीमिमाम् ।
कुर्वेऽहं विदुषां चमत्कृतिकृते **माघ**स्य वृत्तिं लघुं
सूत्रार्थप्रसवां सुबोधसुगमां जाड्यान्धकारप्रभाम् ॥२॥

**अन्तः**– इति श्री**खरतर**गच्छे वरेण्याचार्यश्री**कीर्त्तिरत्नसूरि**संतानीयवाचनाचार्य-श्री**लब्धकल्लोलगणि**क्रमाम्भोजभृङ्गायमानशिष्य-महोपाध्याय-श्री**ललितकीर्तिगणि**विरचितायां सन्देहान्धकारध्वंसदीपिकायां ललितमाघदीपिकायां सुरतवर्णनो नाम दशमः सर्गः ॥

[ 4840 ]

अन्तः— इत्थं मयाऽभयकुमारऋषेश्चरित्रं मिथ्यात्वपुष्टतरकर्मलतालवित्रम् ।
श्रोतृप्रमोदभरदायि सदा पवित्रं प्रोक्तं स्वशक्तिमनपेक्ष्य विचित्रचित्रम् ॥१॥
क्वेदं महर्षेर्विशदं चरित्रं नानावदाताद्भुतवर्यसत्त्वम् ।
क्व वा मदीयेह समस्ति बुद्धिरतीवमन्दा गतसर्वशुद्धिः ॥२॥

तथा च—पङ्गुः समर्थः क्व धरेऽधिरोढुं किं कातरो हेतिगणं विसोढुम् ।
अन्धस्य किं दृग्विषयं प्रयातु किं वामनस्तालफलानि लातु ॥३॥
निर्यातु सिन्धोः किमगाधमग्नः फालं कथं यच्छतु वातभग्नः ।
किं भ्रष्टविद्यो नभसि प्रयातु गायत्वकण्ठः किमु हन्त जातु ॥४॥
किं तर्णकः क्वापि बिभर्तु भारं निःस्वः कथं भूरि ददातु सारम् ।
एवं विबुद्धिः किमहं सदर्थमेतच्चरित्रं वदितुं समर्थः ॥५॥
तथापि किञ्चिच्चरितं यदुक्तं मयाऽवदातैः कतिभिश्च युक्तम् ।
तत्रैव हेतुर्गतबुद्धिसादः सरस्वतीसंरचितः प्रसादः ॥६॥
यद्वाङ्मयाम्भोनिलयाधिदेवी जिनस्य वासा( ? चा ) किल वाणीदेवी ।
स्यात् कल्पशाखिप्रमुखी समाना तुष्टा सती क्लृप्तसुबुद्धिदाना ॥७॥
यथोदकोदञ्चन आत्ममात्रं लात्यर्णवाम्भस्यपि नाधिमात्रम् ।
सङ्ख्याति भो निर्मलनेत्रतारायुक्तोऽपि कत्येव यथेह ताराः ॥८॥

+　　+　　+　　+　　+

अस्ति चान्द्रं कुलं शीतलेश्यं तारकसंयुतम् ।
अमृतस्राविगोस्तोमं सुमनोमार्गसंस्थितम् ॥१॥
सूरिः श्रीवर्द्धमानोऽत्र जज्ञे बुध इलाप्रियः ।
कामजित्वररूपश्रीः सौरमण्डलमध्यगः ॥२॥
विज्ञातवान यः किल सूरिमन्त्रं माहात्म्यवन्तं धरणेन्द्रतन्त्रम् ।
विचार्य संत्यज्य च चैत्यवासं चक्रेतरां यो वसतौ निवासम् ॥३॥
अजनि जिनेश्वरसूरिस्तच्छिष्यो येन दुर्लभनृपस्य ।
परिषद्यणहिलनगरे प्रकटीचक्रे वसतिमार्गः ॥४॥
निर्वाणाध्वरविं कथां नवरसां निर्वाणलीलावतीं
सूत्रं वृत्तियुतं कथानकमहाकोशस्य संवेगकृत् ।

तर्क-न्यायविलासनैकचतुरं सन्नीतिरत्नाकरं
तर्क यो विदधे धियां जलनिधिः संविग्नचूडामणिः ॥५॥
तस्याभूतां शिष्यो तत्प्रथमः सूरिराजजिनचन्द्रः ।
संवेगरङ्गशालां व्यधित कथां यो रसविशालाम् ॥६॥
बृहन्नमस्कारफलं श्रोतृलोकसुधाप्रपाम् ।
चक्रे क्षपकशिक्षां च यः संवेगविवृद्धये ॥७॥
अन्यो बभूवाभयदेवसूरिः प्रज्ञाप्रकर्षाज्जितदेवसूरिः ।
योऽर्थस्फुटां भव्यजनोपकारसारां नवाङ्गीविवृतिं चकार ॥८॥
य औपपातिकोपाङ्ग-पञ्चाशकाष्टकोपरि ।
टीकाश्चक्रे स्तम्भनके पार्श्वमस्थापयत् प्रभुम् ॥९॥
श्रीजिनवल्लभसूरिस्तत्पट्टेऽभूद् विमुक्तबहुभूरिः ।
भव्यजनबोधकारी कल्मषहारी सदोद्यतविहारी ॥१०॥
तर्क-ज्योतिरलंकृतीर्निजपरानेकागमाल्लक्षणं
यो वेत्ति स्म सुनिश्चितं सुविहितश्चारित्रचूडामणिः ।
नानावागजडमुख्यकान् जनपदान् श्रीचित्रकूटस्थितां
चामुण्डामपि देवतां गुणनिधिर्यो बोधयामासिवान् ॥११॥
ततोऽजनि श्रीजिनदत्तसूरिर्येनेह कल्याणमदायि भूरि ।
यः पारतन्त्र्यं विषयं विधिं च प्रकाशयामास विशेषतोऽपि ॥१२॥

\+ \+ \+

ततोऽजनि श्रीजिनचन्द्रसूरिर्गुणौघसंतोषितसर्वसूरिः ।
अपर्वगर्वीकृतसंवरारिः स्वच्छत्वतुच्छीकृतगाङ्गवारिः ॥१४॥

\+ × \+

तत्पट्टे श्रीजिनपतिसूरिर्जज्ञेऽथ पञ्चलिङ्गीं यः ।
श्रीसङ्घपट्टकमलं विवृत्य चक्रे बुधाश्चर्यम् ॥१६॥

\+ \+ \+

छन्दो-लक्षण-तर्क-शास्त्र-विविधालङ्कारवित्कोविदे
पृथ्वीराजसभे कुतूहलगृहे श्रीगूर्जरत्रावनौ ।
तर्क-न्यायवरोपपत्तिसहितैः सिद्धान्तवाक्यैस्तथा
तत्त्वं प्रोच्य महीतले विधिपथं प्रोत्सर्पयामास यः ॥१९॥

तत्पट्टपूर्वगिरिशृङ्गसहस्ररश्मिर्दोषान्धकारहरणोऽपि मृदुः प्रकृत्या ।
श्रीमान् **जिनेश्वर**गुरुर्गुणवानुदीतो धत्तेतरां जगति सम्प्रति तीर्थभारम् ॥२०॥

शिष्यव्याख्यानलब्धिर्जगति निरुपमा भाग्यमेकातपत्रं
रूपं कामानुरूपं वचसि मधुरता कुर्वती तिक्तमिक्षुम् ।
अक्षामा क्षान्तिरुच्चैरधरितजलधिः कापि गाम्भीर्यलक्ष्मी-
धैर्यं सोदर्यमद्रेः सुरसरित इव स्वच्छता चास्ति यस्य ॥२२॥

\+ \+ \+

तद्विनेयैरुपाध्यायैः श्री**चन्द्रतिलका**भिधैः ।
अकारि चरितं रम्यमिदं श्रोतृसुखावहम् ॥२४॥

\+ \+ \+

गणिना **नेमिचन्द्रे**ण सदा स्वाध्यायकारिणा ।
पालितः पाठितोऽस्मि प्राक् सामायिकश्रुतादिकम् ॥२७॥

पाठितानेकशिष्येण सुधिया स्फुटभाषिणा ।
साधुना **सिद्धसेने**न वृद्धिमस्मि प्रभाणि नः ॥२८॥

युगवर**जिनचन्द्रा**चार्यशिष्यो वरिष्ठो
विरुजसुचिरजीवी प्राञ्जलश्चारुचर्यः ।
सकलगुणनिधानं वाचनाचार्यवर्यो
गणिवर**गुणभद्रो**ऽभाणयत् पञ्जिकां माम् ॥२९॥

सूरिं **जिनेश्वर**गुरुं जिनतीर्थयात्राभ्यायातसंघसहितं समरञ्जयद यः ।
श्री**स्तम्भतीर्थ**नगरे वरजल्पकेलौ निर्जित्य वादियमदण्डदिगम्बरेशम् ॥३०॥

\+ \+ \+

सोऽयं श्री**विजयदेवसूरि**र्गुणमणीश्वरः ।
मह्यं प्रमाण-साहित्यकमलां विपुलां ददौ ॥३६॥

भूयो भूमिभुजङ्गसंसदि मनो नानन्दविप्रं घना-
हंकारोद्धुरकन्धरं सुविदुरं पत्रावलम्बप्रदम् ।
जित्वा वादमहोत्सवे पुरि **बृहद्द्वारे** प्रदर्श्योच्चकै-
र्युक्तीः सद्व्युतं गुरुं **जिनपतिं** यस्तोषयामासिवान् ॥३७॥

सम्यगध्याप्य निष्पाद्य यश्चान्तेवासिनो बहून् ।
चक्रे कुम्भध्वजारोपं गच्छप्रासादमूर्द्धनि ॥३८॥

श्रीजिनपालोपाध्यायमौलेस्तस्यास्य संनिधौ ।
मयोपादायि नन्द्यादिमूलागमाङ्गवाचना ॥३९॥

+ + +

श्रीजिनपालोपाध्यायकृतां त्रिःप्रेरणामहम् ।
चरितकरणे प्रापं सरस्वत्युपदेशवत् ॥४१॥

+ + +

वाग्मी तर्कज्ञ-वैयाकरणगणमणिः पीतसिद्धान्तसिन्धुः
साहित्याध्वाध्वनीनो निरुपमकवितानर्त्तकीरङ्गभूमिः ।
व्याख्याताऽत्राश्रुतद्व्याश्रयविषममहाकाव्ययुग्मस्य नाना–
ग्रन्थस्रष्टा च लक्ष्मीतिलकगणिमुनिर्वाचनाचार्यवर्यः ॥४३॥
द्व्याश्रयटीकाकारी द्विव्याकरणः सुदृष्टसाहित्यः ।
सुकविरभयतिलकगणिश्चाशोधयतामिदं शास्त्रम् ॥४४॥ युग्मम् ॥
परोपकृतिशीलेन सुधिया धर्मबन्धुना ।
गणिनाऽशोकचन्द्रेण लिखिता प्रथमा प्रतिः ॥४५॥
श्रीनाभेयजिनेन्द्रादितुङ्गप्रसादभूषिते ।
श्रीवाग्भटमेरुपुरे प्रारम्भि चरितं मया ॥४६॥
श्रीमद्वीसलदेवगुर्जरधराधीशेऽधिपे भूभुजां
पृथ्वीं पालयति प्रतापतपने श्रीस्तम्भतीर्थे पुरे ।
चक्षुः-शीतकर-त्रयोदशमिते(१३१२) संवत्सरे वैक्रमे
काव्यं भव्यतमं समर्थितमिदं दीपोत्सवे वासरे ॥४७॥

+ + +

प्रत्यक्षरगणनया चरितेऽस्मिन्ननुष्टुभाम् ।
सति षट्त्रिंशदूनानि सहस्राणि नव ध्रुवम् ॥१॥ अङ्कतोपि–८९६४ ॥

*

श्रीचन्दनाशोक–सुबन्धु-जीव-पुन्नागसंतान-कदम्बकश्रीः ।
माकन्दवुन्दार्जुनजातिराम ऊकेशनामा बत भाति वंशः ॥१॥
वीरदेववरा भक्तिर्वीरदेव इहाभवत् ।
मुक्ताफलमिव श्राद्धः शुचिः साधुमनोहरः ॥२॥
पार्श्वाभिधः साधुरभूत्तदङ्गजो जिष्णुः पटुः सद्गुणधर्मकर्मणि ।
प्रद्युम्नलक्ष्मीगुरुरामरागभूः समुद्रमध्यस्थपरोपकारकृत् ॥३॥

तत्पुत्रो **मा**नदेवः समजनि धुरि यस्याख्ययाऽद्यापि गोत्रं
सर्वं प्राप्नोति सिद्धिं **कुलधर-बहुदेवौ** **यशोवर्द्धन**श्च ।
जज्ञुस्तस्यातुलास्ते जगति वरदृशां पूर्णचन्द्रप्रकाराः
कीर्त्तिज्योत्स्नाछटाभिर्दिशि दिशि परमं ये प्रकाशं प्रचक्रुः ॥४॥
**या**शोवर्द्धनिरुद्यशीलसुधवा भूस्वस्तरुर्नन्दने
स्वे पट्टे **जिनचन्द्रसूरि**हरिभिर्पाल्यान्मुदा रोपितः ।
साधुस्कन्धविशालपात्रसुमनःश्रेयःफलच्छायको
लोके मर्त्यगणैर्न कैर्जिनपतिः सूरिः सदोपास्यत ॥५॥
**मा**नदेवस्य साधोस्त्रयः स्माङ्गजाः सन्ति **धन**देवसाधुस्तदादिः परः ।
**रा**जदेवस्तदनु साधु**नीम्बा**भिधः स्वकुलकुमुदाकरानन्दपर्वेन्दवः ॥६॥
**धन**देवस्य **धनश्री**र्जिनपालादीन् सुतानसूताष्टौ ।
जायाद्या **गूर्जरी**ति परा वरा यत्सुतानाहुः ॥७॥
एषु स्मास्ति **यशोधरो** **जिनपतेः** सौवात् पितृव्याद् गुरोः
साधुश्रेणिपतेः सुसाधुकमलाभार्गं समादाय यः ।
सद्धर्मे व्यवहारकोटिमकृत श्रीसिद्धिहेतोस्तथा
संलेभे नितरामयं मुनिजने साधूत्तमत्वं यथा ॥८॥
अत्रान्यः **सरण**श्च साधुरिदमीयः **साहण**श्चात्मभू–
र्वीरीजानिरदोऽङ्गजो गुरुरुचिः **सोमः** कलाभूरभूत् ।
यात्रां तीर्थगणे विधाय निजसद्धर्मद्धिकूटं नु यः
प्रीत्या शीतलनाथदेवगृहिकां **वीजापुरे**ऽचीकरत् ॥९॥
**नीम्ब**देवस्य गेहिन्यावासातां प्रथमा तयोः ।
**पद्म**श्रीः सद्गुणावासा शीलहंसकृतादरा ॥१०॥
तद्भार्याऽन्या **जसहिणि**र्या नमस्कारकोटिकाम् ।
गुणयित्वोद्यापनकं चक्रे कोट्यक्षतादिभिः ॥११॥
पूर्वा **जेहड**साधुमङ्गजवरं **तेजः**पतिं प्रासवत्
**पद्म**श्रीः श्रितहर्षमात्तसुमनोमार्गा निशावस्थितिम् ।
एकमात्मभुवं च सम्पदभिधां नक्षत्रमालाश्रियं
नित्यैकक्रमचारिणीं कुलनभोऽलंकारशीलेन्दुगाम् ॥१२॥
साधू **लालण-खीम्बडौ** स्म भवतः श्रेयःकलासङ्गतौ
सोमौ गोऽमृतवर्षिणौ कृतगुरूपास्ती परस्याः सुतौ ।

वाल्हीत्यस्ति सुता कृतानणुतपाः साध्वी सकोशेव या
नित्यैकान्तरभुक्तिकान्तरमहो पक्षोपवासादिकृत् ॥१३॥
स्थानेऽस्ति साध्वी वरपुण्यभाजनं लक्ष्म्यङ्गभूः खीम्बडसाधुपुत्रिका ।
जिनेश्वरैः सूरिभिरर्पितव्रतश्रीका गुणैर्नामत ऋद्धिसुन्दरी ॥१४॥
आम्रश्रीप्रियसाधुलालणतनूजन्मासकौ विद्यते
नाम्ना साधुकुमारपाल इति यः पित्रोः सुपुण्यश्रिये ।
श्रीपद्मप्रभनाथदेवगृहिकां बीजापुरेऽकारयत्
सौवीं पुण्यतरङ्गिणीं त्रिपथगां कर्तुं वयं मन्महे ॥१५॥
जिनप्रबोधसूरीणां पार्श्वे चाग्राहयद् व्रतम् ।
स्वं सुपुत्रं स्थिरकीर्तिं सत्पुत्रीं केवलप्रभाम् ॥१६॥ युग्मम् ॥
जेहडसाधोर्धृतबहुमाये शीलतपोजलगतमलकाये ।
षडुपधानमालाप्तिशुभाये लक्ष्मश्रीर्देवश्रीर्जाये ॥१७॥
मोहिणिराद्या तनयास्ते प्रत्यतिष्ठिपद् या निजगुरुभिः ।
सुपरिकरौ जिनपार्श्वौ सुतपःशीलहारिणिर(ःणी चा)न्या ॥१८॥
देवश्रीरात्मभूरत्नचतुष्कं कान्तिबन्धुरम् ।
संपूरितवती लक्ष्म्या मङ्गलं स्वगृहागमे ॥१९॥
तत्राभूद् धुरि नागपाल उरुधीः पुण्योऽथ योऽचीकरत्
सार्द्धं लालणसाधुना स्वजननीपुण्याय वीरप्रभोः ।
चैत्ये द्वादशदेवदेवगृहिकां सौवर्णकुम्भध्वजां
श्रीजाबालिपुरे तथा द्विरकरोत् तीर्थेषु यात्रां मुदा ॥२०॥
बीजापुरे वासुपूज्यविधिचैत्ये शशिप्रभोः ।
श्रीदेवगृहिकां यश्च स्वपुण्याय व्यधापयत् ॥२१॥
जिनेश्वरगुरोः पार्श्वे महद्धर्या यो व्रतं ललौ ।
स प्राज्ञः सुतपःशक्तिर्विद्याचन्द्रमुनिः परः ॥२॥
तार्त्तीयीकः स चतुरमतिर्बालचन्द्रोऽप्यवक्रो
यः श्रीशत्रुञ्जयप्रमुखमहातीर्थयात्रामकार्षीत् ।
श्रीमद्बीजापुरमधिविभोर्वासुपूज्यस्य चैत्ये
प्रीत्या चाकारयदजितनाथाङ्कितं खत्तकोव्यम् ॥२३॥

\+ + + +

यात्रां रैवतकादिषु प्रकृतवांस्तीर्थेषु संघान्वित-
श्चैत्यार्चादिककार्यचिन्तनमुनी( ? मनाः) सद्भक्तिवृत्तामलः ।
श्रेयःश्रीवरकीर्त्तिकान्तिललितैः सत्यां स्वकीयाभिधां
तन्वानः कुलचन्द्रसाधु ऋजुधीस्तुर्यः समास्तेऽसकौ ॥२६॥

आदेशाच्च जिनेश्वरस्य सुगुरोः श्रीवासुपूज्यप्रभु-
प्रासादे वृषभादिदेवगृहिकाप्रारम्भमारम्भयत् ।
यस्तामादिजिनस्य देवगृहिकामाधापयद् वैक्रमे
वर्षेऽष्ट-द्वि-शिखीन्दु(१३२८)मानविदिते माघे नवम्यां सिते ॥२७॥

एषां सहोदरा भग्नी कुमारीत्यस्ति या व्यधात् ।
श्रेयोमालां द्विधा लातुं तपः षडुपधानकम् ॥२८॥

पद्मला नागपालस्य नागश्रीश्च प्रिये प्रिये ।
पुत्रवच्छीलतपसोः पालने नित्यमादृते ॥२९॥

स्वां श्वश्रूं त्वनुकर्त्तुमत्र चतुरः पुत्रानसूतादिमान्
साधुर्मोहण आद्य एषु जनुषा श्रेयो गुणैश्चापरः ।
पाताख्यः शुभमूर्त्तिकोऽथ लखमोऽन्यो देवसिंहो लघु-
र्ये धर्मस्वपराभवे कुलगतं गच्छन्ति तेजो निजम् ॥३०॥

पद्मलाम्बाकृते साधुर्मोहणः सुविधीशितुः ।
कारयन् देवगृहिकामुत्पताकं यशो व्यधात् ॥३१॥

पाताख्यः श्रीसुपार्श्वस्य स्वाख्यया देवगृहिकाम् ।
कारयामास यत्सूनुः पद्मः पाल्हणदेवीभूः ॥३२॥

नागश्रिया आत्मभुवौ सुपद्मौ पात्रात्मकौ रम्यगुणाभिरामौ ।
स्तो मूलदेवो धणसिंह एतौ सद्धर्मबुद्धिस्तनया च नाटी ॥३३॥

श्रीवासुपूज्यपूजार्थं सद्घाटौ पित्तलामयौ ।
प्रदीपप्रवरौ प्रादान्नागश्रीः सुकृताप्तये ॥३४॥

जम्बूमुनिप्रमुखपूर्वयुगप्रधानश्रीपार्श्वनाथजिनचारुचरित्ररम्या ।
ज्ञानप्रपा प्रविदधे किल पुस्तिकैका नागश्रिया शुभधिया तु निजौरसाभ्याम् ॥३५॥

सा बालचन्द्रदयिता वेला धीदास्ति शीलतुलां या ।
अकृत षडुपधानाङ्का श्रेयस्तल्पे सुखं ललितुम् ॥३६॥

एतस्यास्तनयौ साधुनेत्रवत् सरलाकृती ।
सुव्यापारौ सदा लोके स्त एतौ हेम-जैत्रलौ ॥३७॥

राल्हणसाधुसुता वरवधूटी श्रेष्ठित्रिभुवनसिंहसुपुत्री ।
साधोः कुलचन्द्रस्यास्तेऽसौ जाया खेतूर्धर्मशुभाशा ॥३८॥

+ + + +

प्रासादे जिनवासुपूज्यसुविभोर्वीजापुरेऽचीकर–
च्छ्रीवीरप्रतिमाङ्कखत्तकवरं मातृश्चतुर्विंशतेः ।
तीर्थेशां च कराज्जिनेश्वरगुरोस्तासां प्रतिष्ठां मधोः
श्वेतैकादशिकादिने रस-कर[१३]२६)मिते वत्सरे(?) ॥३९॥ युगलम् ॥

श्रीशत्रुञ्जयमुख्यतीर्थनिवहे यात्रामकार्षीच्च या
चैत्यानां निरमीमपच्च कुसुमैर्लक्षेण पूजा घनाः ।
श्रीश्रेयांसजयाजदेवगृहिके श्रेयोनिधिप्राप्तयेऽ–
भिज्ञाने धर्मसिंहनामकलघुभ्रातुस्तथा च स्वयम् ॥४०॥

ज्ञानार्चां कुलचन्द्रसाधुरिमकां सत्पुस्तिकादीपिके
पृथ्वीचन्द्रचरित्ररत्नघटिते खेतूप्रियायाः कृते ।
क्रीत्वाधाप्यत सौवसद्गुरुजनेभ्योऽदादियं येन तै–
स्ताभ्यां दर्शितमार्गतः स्खलति न श्रीभव्यसार्थैः समम् ॥४१॥

श्रीतीर्थेशजयाभुवोऽभयकुमारर्षेश्चरित्रोत्तमे
सत्पुस्तत्रितये व्यलीलिखदियं खेतूः सुवर्णैर्ध्रुवम् ।
ज्ञानश्रीनिधिबीजकं त्रिपदगं साध्वध्वसात् प्राकरोत्
तद् येनास्य बलात् क्षणादपि लभे श्रेयो वरं सश्रियम् ॥४२॥

श्रीवासुपूज्यचैत्ये श्रीपार्श्वसुखत्तकं कवल्यन्तः ।
व्यधापयत् कुलचन्द्रः श्रेयोऽर्थं महणदेवी-पद्मलयोः ।४३॥

आस्तेऽन्या कुलचन्द्रस्य प्रिया काम्बलदेविका ।
भावेन याऽऽत्मजं धर्मे वर्द्धयत्यात्मपालकम् ॥४४॥

+ + + + +

भोः श्लाघ्यो न कथं सतां वृषवरोऽसौ मानदेवान्वयो
येनानुत्तरभागदेवगृहिकाभारः स्म निर्वाह्यते ।

श्रीबीजापुरवासुपूज्यभवने सार्द्धं वृषज्यायसा
संघेनोत्तरपक्षदेवगृहिका प्राग्भारमाबिभ्रता ॥४६॥

\+ ÷ +

श्रीजिनेश्वरसूरीणां विनेयो लब्धिशालिनाम् ।
अस्यां प्रशस्तौ शस्तायां श्रीकुमारगणिः कविः ॥४८॥

[4841]

**अन्तः**—संवत् १५६९ वर्षे शाके १४३४ प्रवर्त्तमाने आषाढमासे शुक्लपक्षे ३ तृतीयायां तिथौ सोमदिने श्रीवृद्धतपापक्षे युगप्रधानभट्टारकश्रीपुरन्दरसर्वयतिगुणसुन्दरगच्छाधिराजश्रीज्ञानसागरसूरीश्वराणां शिष्य उपाध्यायश्रीज्ञानवर्द्धनगणीनां शिष्यानुशिष्यपं०लब्धिवर्धनगणीनां विलोकनार्थं लिखापितम् । श्रीस्तम्भतीर्थे ज्यो० हर्दासेन लिखितम् ॥

[ 4842 ]

**आदिः**—श्रेयःश्रीसुखकारकः प्रणमतां सम्पत्तिविस्तारकः
कर्म्मारातिनिवारको गुणगणश्रेण्याः सदाधारकः ।
श्रीमत्पार्श्वजिन[:] फणीन्द्रधरणेन्द्राभ्यर्च्चितांह्रिद्वयः
पद्मावत्यभिसेवितः प्रतिदिनं कुर्यात् सतां मङ्गलम् ॥१॥

द्वौ रक्तोत्पलकान्तिकान्तवपुषौ द्वौ जात्यतारोज्ज्वलौ
द्वौ नीलद्युतिदीप्यमानकरणौ द्वौ कज्जलश्यामलौ ।
अन्ये षोडश तीर्थपा जिनवरा निर्द्धूतहेमप्रभा—
स्ते सर्वेऽपि भवन्तु भव्यमनुजां कल्याणकोटिप्रदाः ॥२॥

यां श्रीबीजसमन्वितां तनुजना ध्यात्वा लभन्ते श्रियं
वाचो वाग्भवगर्भितां च नियतं कामांश्च कामाश्रिताम् ।
तां बीजानुफलां सदाश्रितकलां चन्द्रांशुचन्द्रोज्ज्वलां
वन्दे श्रीजिनशासनाश्रितधुरां श्रीशासनस्येश्वरीम् ॥३॥

**अन्तः**—इति श्रीपूर्णिमापक्षे भट्टारकश्रीमुनिचन्द्रसूरि-शिष्यमुनिविद्यारत्नविरचिते श्रीकूर्म्मापुत्रकेवलिचरित्रे शिवगतिवर्णनो नाम चतुर्थोल्लासः परिपूर्णस्तत्परिपूर्णोपरिपूर्णतामभजतायमपि ग्रन्थ इति भद्रम् ॥

इति श्रीकूर्म्मापुत्रकेवलिचरित्रं समाप्तम् । अस्मिन् ग्रन्थे ग्रन्थसंख्यानुमानं ३९०५ अनुष्टुभाम् ।

स्वस्ति श्रियां धाम महोरगेन्द्र-पद्मावतीसेवितपादपद्मम् ।
अहम्मदावादपुरावतंसं श्रीपार्श्वनाथं प्रयतः प्रणौमि ॥१॥
जीयात् स वीरो भुवनैकवीरो यच्छासनं सूर्यवदत्र चित्रम् ।
विभासयत्येव सतां मनांसि ग्रासास्तमावं न कदापि धत्ते ॥२॥
श्रीगौतमं गणधरं प्रणमामि नित्यं यन्नामतः किल सतां सुसमृद्धयः स्युः ।
श्रीमत्सुधर्मगणिरप्यनिशं स जीयाद् यस्य क्रमो विजयते खलु भारतेऽत्र ॥३॥
तच्छ्रीसुधर्मगणिसन्ततिशोभनश्रीचन्द्रप्रभाभिधगुरुर्जयताच्चिरं सः ।
स्वीकृतपयःसमयगां बत पूर्णमासीश्रीपौर्णिमेयगणमेनमिहोद्दधार ॥४॥
तत्पट्टपङ्कजविबोधनसूर्यकल्पाः श्रीधर्मघोषगुरुराजवरा बभूवुः ।
तस्योरुपट्टकुमुदैकशशिप्रभाभाः श्रीसूरयः सुमतिभद्रवरा जयन्तु ॥५॥
तस्यान्वये सद्गुणरत्नराशिः श्रीभीमवल्लीयकुलावतंसः ।
सदा स्फुरच्छुभ्रयशःप्रसारो जीयाच्चिरं श्रीजयचन्द्रसूरिः ॥६॥
ततः शशाङ्कोज्ज्वलकीर्त्तिभाजः श्रीभावचन्द्रा गुरवो बभूवुः ।
रेजुस्तदीयक्रमशो भवाः श्रीचारित्रचन्द्रा गुरवो गरिष्ठाः ॥७॥
तत्पट्टस्फुटपूर्विकाचलशिर[:]शृङ्गारसूरत्विष–
स्तर्क-व्याकरणागमाब्धिविलसच्छास्त्राब्धिपारस्पृशः ।
विद्यारत्नकलाकलापकलितस्वान्ताः क्रियाशालिनः
श्रीमत्श्रीमुनिचन्द्रसूरिगुरवो जीयासुरेते चिरम् ॥८॥
विद्यासुन्दरभावनां कलयितुं प्रौद्योतयद्भूद्रतं
विद्यारत्नमभीष्टदेव-गुरुपत्पद्मैकसांनिध्यता ।
तच्छिष्यो रचयाञ्चकार चरितं कूर्म्मासु[त]स्येदकं
विद्यारत्न इति प्रसिद्धकलितः सप्ताश्व-तिथ्यब्दके (१५७७) ॥९॥
चेतो जहर्ष कुलकं समवी(वे)क्ष्य येषां कूर्म्मासुतस्य समशोधि च यैरिदं तु ।
ते सश्रि हर्षकुलपण्डितराजवर्या जीयासुरात्मगुरुराजयुताः सदैव ॥१०॥
शास्त्राणि सन्ति बहुकानि च वापि लोके विद्वत्कृतानि विबुधैरिदकं तथापि ।
वाच्यं विधाय मयकि प्रसभं प्रसत्तिं कूर्म्माकुमारचरितं सुगमार्थबोधम् ॥११॥
कारक-श्रोतृकर्तॄणां देव-गुर्वोः प्रसादतः ।
वाचकस्याप्यदो भूयान्मङ्गलाय पदे पदे ॥१२॥

कूर्मापुत्रचरित्रचारुकमलं पद्यालिपत्रोद्भृतं
बह्वर्थप्रसरन्महापरिमलं संप्रीणितव्रत्यलि ।
नानालापककेसरातिसुभगं बोधीन्दिरामन्दिरं
विद्वन्मानसमानसे विलसतान्नित्यस्फुरन्मङ्गलम् ॥१३॥

[ 4843 ]

**अन्तः**—श्रुत्वा मुदाऽर्चनविधिप्रमुखप्रकारान् पञ्चात्र तत्फलविलासविचारसारान् ।
तानादितः स्तुत च सप्तदशापि पुण्यमाणिक्यसुन्दररुचि भविका भजध्वम् ॥६१॥

इति श्रीमाणिक्यसुन्दररचिते पूजाधिकारे गुणवर्मचरित्रे साक्षादष्टमाङ्गलिक-धूप-गीत-वाद्य-नाटच-पूजाफलवर्णनो नाम [पञ्चमः] सर्गः ।

एवं स्नात्रविलेपनां शुकयुगाध्यारोपवासार्चना—
पुष्पस्रग्वरवर्णचूर्णसिचयालंकारपुष्पालयाः ।
सत्पुष्पप्रकराऽक्षतार्चनविधि-धूपादिगीतं ततो
वाद्यं नाटचमथो जयन्तु जगतां नाथस्य पूजा इमाः ॥२॥
आसां कथा व्यरचयत् स्वगुरूपदेशान्माणिक्यसुन्दरगुरुर्जगतां हिताय ।
ता वाचयन्तु मुनयो परिभावयन्तु तद्वज्जिनार्च्चनविधीनुपदेशयन्तु ॥३॥
चतुरशीत्यधिकेषु समा चतुर्दशमितेषु गतेषु च विक्रमात् (१४८४) ।
अयमभूज्जिनपूजनसत्कथासमुदयः स करोत्विह मङ्गलम् ॥४॥
श्रीवर्द्धमानजिनभवनभूषिते रचित एष सत्यपुरे ।
ग्रन्थः श्रीमदुपाध्यायधर्मनन्दनविशिष्टसांनिध्यात् ॥५॥
माणिक्याङ्कचतुःपर्वी शुकराजकथा तथा ।
पृथ्वीचन्द्रचरित्रं च ग्रन्था एते च बान्धवाः ॥६॥

इति श्रीजिनेन्द्रपूजाप्रशस्तिः ॥

श्रीमदञ्चलगच्छे श्रीमाणिक्यसुन्दरसूरिविरचिते सप्तदशभेदपूजाप्रकरणं सम्पूर्णम् । मातरग्रामे लिखितं सं० १६५७ वर्षे मार्गशीर्षवदि एकादशी आदितः लिखितम् ॥ ग्रं० २००२ ॥

[ 4844 ]

**अन्तः**—संवत् १६७४ वर्षे ज्येष्ठसुदि ६ दिने भुजनगरमध्ये श्रीमदञ्चलगाच्छे वा०श्रीकमलशेखरगणिशिष्यवा०श्रीशि(स)त्यशेखरगणिपं०श्रीविवेकशेखरगणिवनयी(?वि-नेय)मु०भावशेखरगणिलिखितम् । श्रीचं(चिं)तामणीपार्श्वदेवप्रसादतः वाच्यमानं च(चि)रं जीयात् ।

[ 4846 ]

**आदि:**— ॐ नमः सिद्धम् ॥ गणिश्रीउदयकर्णकेशवगुरुभ्यो नमः ॥
कल्याणकमलागेहं निःसन्देहं सदोदयम् ।
कल्याणविलसद्देहं वन्देऽहं वृषभप्रभुम् ॥१॥
पुण्डरीकं महानन्दं पुण्डरीकवराम्बकम् ।
पुण्डरीकगणाधीशं नत्वा तत्त्वाकरं मुदा ॥२॥
महासेनस्य शीलेन महासेनासमुन्नतेः ।
चित्रसेननरेशस्य चित्रकारिकथां ब्रुवे ॥३॥

**अन्तः**—तपगणगगनविभासनगगनध्वजसन्निभा सुवर्णविभाः ।
श्रीविजयदानसूरीश्वरा बभूवुर्युगप्रवराः ॥६१॥
. . . . . . . . . . . तच्छिष्यजगमल्लाः ।
तच्छिष्यबुद्धिविजयाभिधेन रचिता कथा सुखदा ॥६२॥
श्रीहीरविजयसूरीश्वरपट्टोदयगिरिद्युमणितुल्ये ।
सम्प्रति विराजमाने सूरिश्रीविजयसेनगुरौ ॥६३॥
नभ-रस-रस-चन्द्राब्दे (१६६०) श्रावणसिते पञ्चमीतिथौ सोमे ।
श्रीचित्रसेन-पद्मावतीकथा जयतु बुद्धिविजयकृता ॥६४॥

इति श्रीचित्रसेनपद्मावतीचरित्रं सम्पूर्णमिति । निझगडग्रामे संवत् १९४६ रा भाद[र]वा बाद(वदि) ७॥

[ 4849 ]

**अन्तः**—[युगे] युग्मे स्मर-बार(ण)—चन्द्रे (१५२२) संवच्छ(त्स)रे चाश्विनिमासनाम्नि ।
त्रयोदशीकृष्णशनीश्वरे च कथा कृता शीलमुदाहृतेन ॥७॥
श्रीधर्मसूरिस्तदनुक्रमेण श्रीमूलपट्टे च समागतेन ।
श्रीपद्मसूरिः सुगुरुः स्वसंघे दद्याच्छिवं श्रीमहिचन्द्रसूरिः ॥८॥
शिष्यस्तदीयो महिमानिधानश्चारित्रपात्रः स्वगुणैः प्रधानः ।
पद्मावती शीलगुणस्य कीर्तने कथाऽकरोत् पाठकराजवल्लभः ॥९॥

इति श्रीशीलविषये चित्रसेन-पद्मावती कथा सम्पूर्णा ॥ सूत्रसङ्ख्या ग्रन्था-ग्रन्थ ५०९ मानम् ।

लिखितश्च संवत् १८२४ ना वर्षे मासोत्तममासे आश्विनमासे कृष्णपक्षे द्वितीयातिथौ शुक्रवासरे श्रीसकलपण्डितोत्तमकण्ठशृङ्गारहारमुकुटमणिदिनकरोपमेयपं०-श्री१०८श्रीमानसुन्दरगणिशिष्यचरणसेवी(वि)पं०देवसुन्दरगणिना लिपीकृतं भ्राता पं०-

विनयसुन्दरगणिवाचनार्थाय लिखापितमिदं पुस्तकम् । श्रीरस्तु । श्रीबर्हानिपुरमध्ये श्रीचन्द्रप्रभस्वामिप्रसादाद् इति मङ्गलम् ।

[ 4850 ]

**अन्तः**— श्रीनयविजयशिष्येण भक्तिना स्तबुकार्थम् ।

चरित्रं चित्रसेनस्य पुन्यार्थे चारुनिर्म्मितम् ॥२०॥

इति श्रीशीलविषये चित्रसेनपद्मावती चरित्रं सम्पूर्णं मुनिगुमानविजयग०पं०-माणिक्यसत्केन लिलेख ।

सं० १८१९ वर्षे फागुण वदि १३ तिथौ मार्त्तण्डवासरे श्रीराधिकापुरनगरे श्रीऋषभदेवजिनप्रसादात् ।

**स्त० अन्तः**—हवे टबानो करनार कहे छै, पण्डिनश्रीनयविजयगणिना शिष्य पं०भक्तिविजयगणिई स्तबुकार्थ करीनइं करकं चित्रसेनपद्मावतीचरित्रनो टबो तस्य शिष्य पुन्यविजयने अर्थे मनोहर सुन्दर रच्यो ॥२५॥

इति श्रीशीलविषये चित्रसेन-पद्मावतीचरित्रं सम्पूर्णम् ।

सकलभट्टारकपुरन्दर-भट्टारकश्री १००८ श्रीश्रीमच्छ्रीविजयजिणे(ने)न्द्रसूरीश्वर-जित्कानां चरणारविन्दसेवकमधुकरसमानपं०श्रीमाणिक्यविजयग०तत्शिष्यपं०गुमान-विजयग० चित्रसेनपद्मावतीचरित्रं लिखतितरां स्वआत्मार्थे ॥

(केनचिदन्येन लिखितमिदम्—)

पं० नरोत्म(त्तम)विजे(जय) पं० रंगस्तक(सत्कः) ।

[ 4851 ]

**अन्तः**— इति श्रीशीलविषये चित्रसेन-पद्मावतीप्रिया ।

तत् चरित्रं समाप्तेन लिख्यते स्वसुहं(शुभं)करम् ॥१॥

नाग—शशि—चन्द्र—सिद्रा(१८१८) वर्षे भाद्रपदे वरं ।

कृष्णे चतुर्दशीतिथौ भौमवासरे तद्दिने ॥२॥

**स्त० अन्तः**—सकलभट्टारकपुरन्दरभट्टारकश्री१००८श्रीविजयप्रभसूरीश्वरजित्कानां चरणारविन्दसेवनमधुकरसदृशपं०श्री५प्रेमविजयगणि-तत्शिष्यश्रीभानूदयाचलसदृश अष्टा-वधानश्रीपं०श्री५कान्तिविजयगणी-तत्शिष्यश्री५पं०श्रीरूपविजयगणि-तत्शिष्यपं०श्री५कृष्ण-विजयगणि-तत्शिष्यपं०श्री५दीपविजयजीग०तत्शिष्य दासानुदासमुनिगलाबविजयगणी लिपिं कृत्वा श्रीअणहिल्लपुरपत्तनाख्ये श्रीमत्पञ्चासरजीप्रसादेन श्रीमद्वीरमाणिभद्रजीसाहा-य्यात् श्रेयः ।

[ 4853 ]

**अन्तः**—इति श्रीजयशेखरसूरीन्द्रकृतं धम्मिलचरित्रं सम्पूर्णम् ॥

स श्रीनाभिनरेन्द्रनन्दनजिनः प्रेयांसि देयाच्चिरं
यः स्थाम्ना त्रिजगत्पराभवकरं भूपं जिगाय स्मरम् ।
स्कन्धद्वन्द्वनिलीनकुन्तलततिव्याजेन वर्याक्षर-
न्यासं वैरिजयप्रशस्तिरमला तेनैव किं लिख्यते ॥१॥
श्रीसिद्धार्थनरेन्द्रवंशतिलकः श्रीवर्द्धमानो जिन-
स्तत्पट्टे किल पञ्चमो गणधरः स्वामी सुधर्मा ततः ।
श्रीजम्बू-प्रभवादयो गणभृतस्तेषां क्रमेणागतः
श्रीमानञ्चलगच्छ एष विजयी विश्वे चिरं नन्दतात् ॥२॥
तत्रार्यरक्षितगुरुर्जयसिंहसूरिः श्रीधर्मघोषगुरवोऽथ महेन्द्रसिंहाः ।
सिंहप्रभो गणधरोऽजितसिंहसूरिर्देवेन्द्रसिंहगुरवः परवादिजैत्राः ॥३॥
धर्मप्रभो गणधरो जितवादिसिंहः श्रीसिंहसूरितिलका गुरवो महेन्द्राः ।
तत्पट्टकाननमनोहरकल्पवृक्षा विश्वे जयन्तु सुचिरं गुरुमेरुतुङ्गाः ॥४॥
महेन्द्रप्रभसूरीन्द्रपाणिपङ्कजदीक्षिताः ।
दक्षमुख्यास्त्रयः शिष्या अभूवन्निति नामतः ॥५॥
श्रीमुनिशेखरसूरिः श्रीजयशेखरसूरयः ।
श्रीमेरुतुङ्गसूरीन्द्रास्ते च पट्टे प्रतिष्ठिताः ॥६॥
कविचक्रधरः श्रीमान् सूरिः श्रीजयशेखरः ।
नापि वेधा विधातुं यत्कवित्वगणनां विभुः ॥७॥
प्रबोधचिन्तामणिरद्भुतस्तथोपदेशचिन्तामणिरर्थपेशलः ।
व्यधायि यैर्जैनकुमारसम्भवाभिधानतः सूक्तिसुधासरोवरम् ॥८॥
विज्ञार्थितैस्तैः किल धम्मिलस्य प्रशस्यमेतच्चरितं वितेने ।
निपीयतां तत्र पवित्रपुण्यरसः सरस्यामिव भव्यलोकैः ॥९॥
द्वि-षट्-वारिधि-चन्द्राङ्कवर्षे [१४६२] विक्रमभूपतेः ।
अकारि तन्मनोहारि पूर्णं गुर्जरमण्डले ॥१०॥
तत्र त्रीणि सहस्राणि तथा पञ्चशतानि च ।
चतस्रोऽनुष्टुभश्चेति ग्रन्थसङ्ख्या विनिश्चिता ॥११॥ ग्रन्थाग्रन्थ (३५०४) ।
यावन्मेरुमहीधरः क्षितितले यावच्च रत्नाकरा
यावच्चन्द्रदिवाकरौ ग्रहगणा यावन्नभस्तारकाः ।
भव्यानां शिवमार्गदर्शनविधौ बिभ्रत्प्रदीपायितं
तावन्नन्दतु धम्मिलस्य चरितं वाच्यं मुनीन्द्रैश्चिरम् ॥१२॥

[ 4854 ]

**अन्तः**– इति श्रीमल्लधारिश्रीदेवप्रभाचार्यविरचिते धर्मसारचूडामणौ मृगावती-चरितस्य पञ्चमो विश्रामः समाप्तः । समाप्तं चेदं मृगावतीचरितमिति ॥

एवं सर्वग्रन्थाग्रम् १८५६ । संवत् १५७१ वर्षे ज्येष्ठमासे शुक्लपक्षे त्रयोदश्यां तिथौ भृगुवासरे श्रीमति पत्तने लिखितोऽयं ग्रन्थः । प्रतिं शुद्धां चक्रे कमलसंयमगणिना स्वपरोपकाराय ॥

[ 4859 ]

**अन्तः**– समाप्तं चेदं मणिपतिराजर्षिचरितमिति ।
एतन्मणिपते राज्ञश्चरितं चारुचेतसः ।
दृष्टान्तैरष्टभिर्गाथैस्तावद्भिरेव च (?) ॥१॥
जम्बूनागाभिधानेन रचितं श्वेतभिक्षुणा ।
बोधार्थं भव्यजन्तूनां स्पष्टार्थं स्वल्पवर्णकम् ॥२॥
न मन्दबुद्धयो बोद्धुं न व्याख्यातुं च जानते ।
यतोऽतः सुगमं दृब्धमिदमेव विभाव्यताम् ॥३॥
किं च — पूर्वाचार्यैर्विदृब्धे मणिपतिचरिते सत्यपीदं मया यद्
भूयो दृब्धं न तत्र प्रवरकविरहं चेतसीत्येष दर्पः ।
किन्त्वेषां [सत्]कवीनामतिविमलधियां धोरगम्भीरवाचां
वैदग्धीप्राप्सुनाऽयं स्वमतिसुविभवाभ्यास एवं व्यधायि ॥४॥
इदं कृत्वा मया पुण्यमगण्यसुखकारणम् ।
यदवाप्तं तेन भव्यानां निर्वृतिर्जायतान्तरम् ॥५॥
यावत् सूर्यः प्रतपति जगज्जन्तुकर्म्मैकसाक्षी
यावच्चेद् वा रजनिवनिताभूषणो भूरिधामा ।
तावद् भूयान्मम कृतिरियं सुप्रतिष्ठाऽतनिष्ठा-
ऽप्रज्ञस्यापि प्रवरविदुषां सज्जनानां प्रसादात् ॥६॥
[1]हस्ती [2]हारः [3]सिंहो [4]मेतार्यर्षिस्तथा [5]नरेन्द्रश्री ।
[6]वृषभो [7]गृहकोकिलको [8]विद्वत्सवितास्तथा [9]बटुकः ॥१॥
श्रीमांश्च [10]नागदत्तो [11]वैद्यः [12]किरथवा [13]रैभवथो गोपः [13] ।
[14]सिंही [15]शीतार्त्तहरिः [16]कौष्ठमुनिश्चापि षोडशमः ॥२॥

लिपीकृत व्यास नथमल नागोरमध्ये संवत् १९६४ मास चैत्र मास कृष्ण-पक्षतिथौ ।

[ 4866 ]

अन्तः— मुनिपतिचरित्रं यत् पवित्रं पापनाशनम् ।
य: शृणोति विवेकात्मा मङ्गलं वृणुते हितम् ॥११२॥
हंसराजगणिप्राज्ञः सर्वविद्याविशारदः ।
कल्याणमल्लमुनीन्द्रोऽभूत् तत्पट्टे सुखदो नृणाम् ॥११३॥
नैनसुष (?) महाधीरो मुनीनामधिपो दमी ।
सर्वसौख्यकरो लोके जैनधर्मावतंसकः ॥११४॥
तत्पादपद्मप्रसादेन गणिनेमिचन्द्रकः ।
चरित्रं पावनं चक्रे सर्वसौख्यकरं नृणाम् ॥११५॥
रसाब्धिसप्तेन्दुमिते(१७४६) हि वर्षे सूर्ये च कृष्णे च वणिन्दुघस्रे ।
पुरे च जीराक्षशुभे समृद्धे श्रीनेमिचन्द्रः सुखदं चकार ॥११६॥
इत्याचार्यश्रीनेमिचन्द्रविरचिते मुनिपतिचरित्रे षोडशमः सर्गः ॥

इति मुनिपतिचरित्रं सम्पूर्णम् । लिखितमिदं देवीयाऋषिणा वृद्धभ्रातृपूज्य-तुल्लाऋषीणां हेतवे । संवत् १९०६ मिति पौषसिते पक्षे अष्टम्यां भोमवासरे मुकेरीय-नगरमध्ये केलिकपिराज्ये ।

[ 4877 ]

अन्तः— श्रीरत्नशेखरगुरुप्रवरप्रसादाद् हर्षादिवर्धनगणिः सुरसैकपात्रम् ।
चक्रे कथां सद[य]वत्सकुमारसत्कां सत्पात्रदानविमलाभयदानवाच्याम् ॥१॥
इति पात्रदाने अभयदाने च सदयवत्सकुमारकथा समाप्ता ॥

संवत् १५७४ वर्षे ज्येष्ठमासे कृष्णपक्षे नवम्यां तिथौ अद्येह श्रीअमरावती-नगरे श्रीपूर्णिमापक्षे पूज्यश्री ५ भुवनप्रभसूरि-तत्पट्टालंकारश्रीश्रीकमलप्रभसूरि-शिष्यराज-माणिक्यलिखितं परोपकाराय ।

[4881]

गौत्मा(तमः) श्रीसुधर्म्मा च जम्ब्वाख्यो मुनिपुङ्गवः ।
त्रयः केवलिनः पूज्या नित्यं नो सन्तु सिद्धये ॥१४॥
श्री विष्णुनन्दिमित्राख्योऽपराजितमहातपाः ।
गोवर्द्धनो भद्रबाहुः पञ्चैते श्रुतसागराः ॥१५॥
द्वादशाङ्गश्रुताभ्यासनीरेण क्षालिताङ्गकान् ।
प्रणौम्यहं त्रिशुद्धया तान् पञ्च पाण्डित्यहेतवे ॥१६॥

सृष्टिः समयसारस्य कर्त्ता शूरपदेश्वरः ।
श्रीमान् श्रीकुन्दकुन्दाख्यस्तनुते मेदुरां मतिम् ॥१७॥
पुराणी पद्धतिर्यस्य हृदये प्रस्फुटं गता ।
प्रणौमि जिनसेनस्य चरणौ शरणं सताम् ॥१८॥
जीयात् समन्तभद्रोऽसौ भव्यकैरवचन्द्रमाः ।
दुर्वादिवादकण्डूनां शमनैकमहौषधिः ॥१९॥
अकलङ्कगुरुर्जीयादकलङ्कपदेश्वरः ।
बौद्धानां बुद्धिवैधव्यदीक्षागुरुरुदाहृतः ॥२०॥
शुद्धसिद्धान्तपाथोधिपारीणां परमेश्वरः ।
नेमिचन्द्रश्चिदानन्दपदवीमुख्यतां गतः ॥२१॥
प्रभा गुणवती यस्य प्रभाचन्द्रस्य सूरीणाम् ।
सोऽस्तु मे बुद्धिसिद्ध्यर्थं कारुण्यादिरसालयः ॥२२॥
पञ्चाचाररता अन्ये सूरयः सश्रुता सुरैः ।
ते मे दिशन्तु सन्मेधां पद्मनन्दीश्वरादयः ॥२३॥
मङ्गलादिप्रसिद्ध्यर्थं मया भावेन संस्तुताः ।
श्रीहनुमत्कुमारस्य कथायाः सिद्धये पुनः ॥२४॥
गुणग्रहणनिर्मुक्ता दृश्यन्तेऽमी जनाः कलौ ।
तेषां भयात् कथं न स्याद् मतिः कृत्ये विसारिणि ॥२५॥

**अन्तः**— जैनेन्द्रशासनसुधारसपानपुष्टो देवेन्द्रकीर्तियतिनायकनैष्ठिकात्मा ।
तच्छिष्यसंयमधरेण चरित्रमेतत् सृष्टं समीरणसुतस्य महर्द्धिकस्य ॥२६॥

विशदशीलस्वर्धुनीमिलातलैकराजहंससोत्सवाय क्रीडनप्रियः स्वमतसिन्धुवर्द्धन-प्रकृष्टयानीनन (?) पीनतेजसोद्भुतप्रभासितः सुरेन्द्रकीर्ति-शिष्यविद्ययाचनङ्गमर्दनैकपण्डितः कलाधरस्तदीयशिष्यदेशनामवाप्य शुद्धबोधरमाश्रितो जितो जितेन्द्रियस्य भाक्तिकः ।

गोलाश्रृङ्गारवंशे नभसि दिनमणिर्वीरसिंहो विपश्चिद्
भार्यापृथ्वीप्रतीतः तनुरुहविदितो ब्रह्मदीक्षाश्रितोऽभूत् ।
तेनोच्चैरेष ग्रन्थः कृतकृतिसुतरां शैलराज्यस्य सूरेः
श्रीविद्यानन्दिदेशात् सुकृतविधिवशात् सर्वसिद्धिप्रसिद्ध्यै ॥९४॥
इदं श्रीशैलराजस्य चरितं दुरितापहम् ।
रचितं भृगुकच्छे च श्रीनेमिजिनमन्दिरे ॥९५॥

धर्मार्थी लभते वृषं धनयुतो वृद्धिं च निःस्वो धनं
पुत्रार्थी तु कुलोचितं च तनयं कामांश्च कामी लभेत् ।
मोक्षार्थी वरमोक्षमाशु लभते प्रोक्तेन सान्द्रेण किं
ह्येतत् शैलमुनीन्द्रराजचरितं सर्वार्थसिद्धिप्रदम् ॥९६॥
पठकः पाठकश्चैव वक्ता श्रोता च भावकः ।
चिरं नन्द्यादयं ग्रन्थस्तेन सार्द्धं युगावधि ॥९७॥
प्रमाणमस्य ग्रन्थस्य द्विसहस्रमितं बुधैः ।
श्लोकानामिह मन्तव्यं हनूमच्चरितश्रुते ॥९७॥

इति श्रीहनूमच्चरित्रे महाकाव्ये ब्रह्माजितविरचिते द्वादशसर्गः पर्याप्तः ॥

इति श्रीहनूमच्चरित्रं संपूर्णं लिखापतं श्रीपूज्यआचार्यजट्टमलस्वामिजी-तच्छि-(च्छै)क्षवाइमलऋषिस्वामीजी-तच्छि(च्छै)क्षपूज्यराइमलऋषिस्वामिजी—तच्छि(च्छै)क्षपूज्य-मानमुनीश्वरऋषिस्वामीजी—तच्छि(च्छै)क्षश्रीपूज्यदयालऋषिजी—तच्छी(च्छै)क्षश्रीपूज्यमुनि-माईदासऋषिजी-तदन्तेवासिना लिखितमिदं पुस्तकं पुण्यपूर्णानन्दर्षिहरिजीऋषिणा स्वात्मार्थे ।

संवत् १७५९ वर्षे वर्षाऋतौ द्वितीयमासे कृष्णपक्षे द्वितीयायां विधोः सुत-वासरे अवरंगसाहराज्ये गताब्द ४५ सिरन्दिनगर्यां मध्ये लिपीकृतम् ।

[ 4886 ]

**अन्तः—** इति श्रीकूर्म्मापुत्रकथानकं समाप्तम् ।

संवत् १६५१ वर्षे चैत्रकृष्णत्रयोदश्यां लिखितं पण्डितसभाशृङ्गारगुणगणागार-धृतदुर्द्धरमहाव्रतभारकृतभव्यजनोद्धारपण्डितश्रीनयविजयगणिक्रमभ्रमरायमाणविद्याविजय-गणिना लिखितं सतीर्थ्यगणिप्रवरगणिश्रीविनयविजयपठनार्थम् ॥

यावत् शीतकरस्य मण्डलमिदं स्वःसत्पथे भ्राजते
पृष्टे यावदसौ भुजङ्गमपतिर्धत्ते भुवं दुर्द्धराम् ।
लोके यावदपाकरोति तमसां स्तोमं गभस्तिद्युति-
स्तावन्नन्दतु पुस्तिकेयमनिशं प्राज्ञोपकारक्षमा ॥

श्रीतपागच्छे लाभपुरनगरे श्रीअकबरराज्ये जयोऽस्तु ।

[ 4890 ]

**अन्तः—** इति कूर्मापुत्रचरित्रं सम्पूर्णम् । संवत् १९२६ ना वरषे आसो वदि चतूरदसी वार रवेउ ने दिवसे कलाक ८ बजते स्मापत । लीः श्रीवढवाणमधे श्री-रीषभनाथजीना प्रसादतः । संपूर्ण लीᵒसाᵒगोवनजी मकनजी ते वीसा सरमाली पोतार्थे श्रीवढवाणमां रेवासी तेना ग्रंथाग्रंथ ७०० श्लोक १० ।

**स्त०अन्तः**— श्रीहेमवीमल सदगुरू तेहनो सीष्य माणक्यवीमल तेहनें अती रोमे करी पूर्व ग्रंथ रू(ऋ)षिमंडलादीक जोइ तीहां थकी उधरीने चरित्र–प्रकरणनी रचना कीधी, जे वांचे भणें साभलें संभलावें ते घणा काल जयवंतो होइ ॥९८॥

[ 4895 ]

**अन्तः**— एवं जम्बूज्झयण समत्तओ। उपाध्यायश्रीपद्मसुन्दरगणी(णि)कृत्य(तं) आलापकस्वरूपं सम्पूर्णम् । इति श्रीजम्बूचरित्रसूत्रं समाप्तम् ॥

हरीआली—

विण पगले पर्वत चढें, विण दांतां खड खाय ।
हुं तुझ पुछुं पंडिता, किस्यौ जिनावर जाय ॥६॥
नील चंचल रुंख अनेक, फल फल बीजां नाम ।
तोड्यो पछी पाकस्यै जीरे, कीहां फलारौ नांम ॥७॥

संवत् १८६८ ना वर्षे साके १७३३ प्रवर्त्तमाने आश्विनमासे शुक्लपक्षे प्रतिपदातिथौ बुधवासरे लिपीकृत्यं(तं) आत्मार्थे चांगाग्रामे चौमास्युं रह्या हता तारें लष्युं छैं । लिखितं मुनि निद्रांनजी श्री५धर्म्मनाथजीप्रसादात् ।

इति श्रीजंबुचरित्रनइं विषइं एकविस उद्देसा सहित अध्ययन संखेपमात्र संपुर्ण थयौ छे। लिखितं कंबोई कोलीनी मध्ये पुरओ कर्यओ छे। अर्थ प्रतइं संवत् १८६८ ना वर्षे मासोत्तममासे मागसीरमासे कृष्णपक्षे तीथीयां एकादसे वार बुद्रहं लपीकृत्य आत्मा अर्थे लष्युं छे, जे माटें सुध अशुध लष्युं होइं अद्धीकु ओछुं लखाणुं होय ते जांणे अजांणें मने वचने करीनें कायाइ मिछामि दुक्कडं ।

[4899]

**अन्तः**— संवत् १८१३ ना आसू [सु]द १३ दिने भोमवारे तिथियोगयोगसिद्धिता । लिपीकृतं वडतपागच्छे वडीपोशाल लिखितं श्री ५ श्रीराजसुन्दरजी, तत्शिष्य हर्षसुन्दरजी, तत्शिष्यः भक्तिसुन्द[र]जी भाई हेतसुन्दरेण लिपीकृतं माणसाग्रामे माणिक्यचन्द्रपठनार्थम् ।

[ 4902 ]

**अन्तः**—सिरिचन्दगच्छगयणे जाओ सिरिदेवभद्दसूरिरवी ।
पयडियपयत्थसत्थो चित्तं जं सो न सत्तासो ॥१॥
तस्सीसो सिरिसिद्धसेणसूरी समग्गगुणगणग्घविओ ।
मुणिचन्दसूरिपवरो जाओ लोयम्मि विक्खाओ ॥२॥

सिरिमुणिचन्दगुरूणं पयपंकयरायहंससारिच्छो ।
पंडियतिलओ आसी सुपसिद्धो वीरदेवगणी ॥३॥
तेणं एसा रइया महिवालकहा वियड्ढमणहरणा ।
निम्मलपयत्थकलिया नियगुरूणं पसाएण ॥४॥

इति श्रीमहीपालकथा समाप्ता ।

[4906]

**अन्तः**— संवत् १५०९ वर्षे मालवदेशे छेटमाग्रामवासि—प्राग्वाटज्ञातीयसा० नरपालभार्यापवी—तत्पुत्रेण सा० मांइयाकेन तत्पत्नी स० रत्नुतत्कुक्षिसमुद्भूतवना—फना-तद्भगिनी गांगी—चांगीकुटुम्बयुतेन श्रीमत्तपागच्छमण्डनश्रीसोमसुन्दरसूरि—शिष्यश्री-रत्नशेखरसूरि—शिष्यलवपण्डित पं० विनयमूर्तिगणीनां श्रीविजयचन्द्रकेवलिचरित्रं वाचनार्थं स्वश्रेयसे कायथाग्रामे लिखापितम् । सा० गोधाकेन लिखितमस्तीति ।

[4921]

**अन्तः**— पञ्चदण्डछत्रप्रबन्धः । त्रिभुवनप्रसिद्धगगनाग्रजाग्रच्छिखरमहाकालप्रासादाप्राच्छलब्धभीष्मगन्धमादनस्थानपार्श्वस्थसिद्धवटशाखाच्छादितभैरवकुण्डासन्नोपविष्टकालउ-कोईलउ नैरव मसाणखंभ अग्निकवेताल झांपडादिवीरसाधनसिद्धानेकयोगीन्द्रनवनाथ-चतुरशीतिसिद्धषट्पञ्चाशत्कोटिकात्यायनीचतुः षष्टियोगीनी-द्विपञ्चाशत्क्षेत्रपाल—त्रिपुरोत्ताल-हनुमन्त—सुग्रीव—नारसिंहाद्यनेकवद्भवीरवलयपीठखर्परतस्करगुहीगह्वराकपर्दिकद्यूतकारचतुष्किकामहाराजाधिराजविक्रमादित्यविविधक्रीडाकाननाद्यनेककमनीयकौतुककोटिदिदृक्षाक्षिप्तदूरदूरतरदेशागतमध्यमोत्तमजनजनितवर्यायां श्रीउज्जयिनीनगर्याम् ॥ उज्जयिनीवर्णनम् ।

[4922]

**आदिः**— युगादिदेवादिम-वर्द्धमानान्तिमान् जिनान् केवलिनः परांश्च ।
श्रीपुण्डरीकादिगुरून् यतींश्च नमाम्यहं बोधिसमाधिहेतोः ॥१॥
किञ्चिद् गुरोराननतो निशम्य किञ्चिन्निजान्यादिकशास्त्रतश्च ।
ग्रन्थो ह्ययं पञ्चशतीप्रबोधसम्बन्धनामा क्रियते मया तु ॥२॥
लक्ष्मीसागरसूरीणां पादपद्मप्रसादतः ।
शिष्येण शुभशीलेन ग्रन्थ एष विधीयते ॥३॥

**अन्तः**— इति भावस्वदारसंतोषे यतिशुद्धाहारग्रहणभूपयतिसंबन्धः । ग्र० ७९४१ । इति श्रीसोमसुन्दरसूरिपट्टालंकरण—श्रीमुनिसुन्दरसूरि-श्रीजयचन्द्रसूरिपट्टालंकरण-श्रीरत्नशेखरसूरिपट्टालंकरण—श्रीलक्ष्मीसागरसूरि—श्रीसोमदेवसूरि— श्रीरत्नमण्डनसूरिशिष्य-पं० शुभशीलगणिविरचितपञ्चशतीसंबन्धे चतुर्थोऽधिकारः समाप्तः ॥

विक्रमार्काच्च विधु-द्वीषु-चन्द्रप्रमिते ( १५२१) संवत्सरे ।
अमुं व्यधात् प्रबन्धं तु शुभशीलाभिधो बुधः ॥१॥

एकदा श्रीतपागच्छाधिराजश्रीसोमतिलकसूरयो महता श्रीसंघेन समं श्रीशत्रुञ्जये जिनान् वन्दितुं ययुः । तत्रैव संवत् १३९(?) वर्षे वारत्रैर्वन्दिता मुख्यप्रासादे गर्भगृहे पुण्डरीक[ प्रति ]माद्वयं ५६ जिनानन्यांश्च वन्दन्ते स्म । ततस्त्रिद्वारप्रासादे ४९२ जिनान् वन्दन्ते स्म । ततो मोढेरक–शंखेश्वर–सत्यपुर–समलिका[ विहारादि ]षु १००८ त्रिद्वारप्रासादबलानकं यावत् । ततः समरसिंहवसहिकायां ३३ जिनान् वन्दन्ते स्म । ततः कोडाकोडिप्रासादे २९१ जिनान् वन्दन्ते स्म । ततः श्रीवीरप्रासादे ६८ जिनान् वन्दन्ते स्म । ततो देवकुलिकायां कुन्तीयुता पञ्चपाण्डवप्रतिमा वन्दन्ते स्म । ततो मत........जिनान् वन्दन्ते स्म । ततोऽष्टापदावतारे ३८६ जिनान् वन्दन्ते स्म । ततः खोखावसहिकायां ९५ प्रतिमा वन्दन्ते स्म । ततो राजादनीत........ सावतारे कुण्डावतारे गृहिकाखत्तकस्तम्भद्वारेषु च १४२३ जिनान् वन्दन्ते स्म । जिनभवनद्वाराद् बहिस्तोरणशिखरे देवगृहिक........२९ जिनान् वन्दन्ते स्म । प्रासाद-संमुखासु देवगृहिकासु ४० प्रतिमा वन्दन्ते स्म । ततः पश्चिममण्डपसहितनन्दी-श्वरावतारे १९४ जिनान् वन्दन्ते स्म । वस्तुपालमन्त्रिभगिनीसप्तककारितसप्तदेव-कुलिकासु ४२ जिनान् वन्दन्ते स्म । ततः स्तम्भनकावतारे इन्द्रमण्डपे जिनान् वन्दन्ते स्म । ततो वस्तुपालमन्त्रिकारितगिरिनारावतारे १६ जिनान् परिजनांश्च वन्दन्ते स्म । ततः—रवसहिका १०५४ जिनान् वन्दन्ते स्म । ततः स्वर्गारोहण-प्रासादे नमि-विनमिसेवकसहितश्रीयुगादिजिनप्रतिमायुतान् १६ जिनान् वन्दन्ते स्म । ततोऽजितनाथविहारे अणुपमसरीर(सरसि)स्थदेवगृहिकायुगे श्रेयांसजिनभवने च ९१ जिनान् वन्दन्ते स्म । ततश्चिल्ल[ण]तलावल्लिकासमीपस्थदेवगृहे ६ ततः प्रतिमा वन्दन्ते स्म । श्रीनेमिनाथभवने २८ जिनान् वन्दन्ते स्म । ततः श्रीवीरभवने ३६ जिनान् वन्दन्ते स्म । ततः कपर्दियक्षभवने ७१ जिनान् वन्दन्ते स्म । तत्रासन्नदेवगृहिकायुगे १८ जिनान् वन्दन्ते स्म । ततो मणूआविहारे २९ जिनान् वन्दन्ते स्म । छिंपा-वसहिकायां १३ जिनान् वन्दन्ते स्म । ततो मरुदेवीमातरं ११ जिनांश्च वन्दन्ते स्म । श्रीशान्तिनाथप्रासादे २४ जि[ना]न् वन्दन्ते स्म । चिल्ल[ण]तलावल्लीसमीपे अलक्ष-देवकुलिकायां अजितनाथभवने जीरापल्लीपार्श्वभवने १४ जिनान् वन्दन्ते स्म । एवम-न्यानपि बहून् वन्दन्ते स्म श्रीसोमतिलकसू[र]यः । एवं जिना[नां] यानि बिम्बानि भवन्ति बभूवुर्भविष्यन्ति तानि अहं श्रीसोमतिलकसूरिवन्दितानि बिम्बानि वन्दे भावेन ॥

इति श्रीशत्रुञ्जयमहातीर्थे सोमतिलकसूरिर्वन्दते । बिम्बसंख्या संक्षेपात् कृता मया । संवत् १९६१ वर्षे मितिफाल्गुणकृष्णपक्षे षष्ठम्यां(ष्ठ्यां) तिथौ शनिवासरे ।

[ 4936 ]

**अन्तः**— श्रीषण्डेरकीयगच्छे श्रीयशोभद्रसूरिसंताने तत्पट्टे श्रीसालिसूरिः, तत्पट्टे श्रीसुमतिसूरिः तत्पट्टे श्रीशान्तिसूरयः । तदन्वये श्री शान्तिसूरिविजयराज्ये वा० श्री-नइ(य)कुंजरद्वितीयशिष्यमु० हंसराजः(जेन) श्रीभोजचरित्रं सपूर्णं कृतम् ॥

[ 4941 ]

**अन्तः**— श्रीचन्द्रगच्छाम्बरभूषकोऽभूत् तपागणे भानुरिवेद्धदीप्तिः ।

प्रबोधयन् नव्यजनाम्बुजालीः स्वगोविलासैरिव साधुवर्गैः ॥१॥

तत्राभवन् वरगुणगणमणिरोहणमहीधरप्रतिमाः ।

परमगुरुसोमसुन्दरगुरवो विद्याब्धिपारगताः ॥२॥

तच्छिष्या मुनिसुन्दरगुरवो जयचन्द्रसूरयोऽभूवन् ।

स्व-परागमे पृथुजलनिधिपारगता रुचिरगुणनिलयाः ॥३॥

अभवंस्तद्विनेयाः श्रीविशालराजाभिधानगुरुराजाः ।

श्रीयुक्तरत्नशेखरगुरव उदयनन्दिसूरयश्चापि ॥४॥

चारित्ररत्न-लक्ष्मीसागरगणि-सोमदेवनामानः ।

विजयन्ते उपाध्याया एते सम्प्रति लसन्मतयः ॥५॥

श्रीमन्मुनीशमुनिसुन्दरसूरिराजशिष्यो मनीषिशुभशीलमुमुक्षुरेषः ।

प्रबन्धमेनमलनाम्बुधिपुष्करेषु चन्द्रप्रमाणसमये किल विक्रमार्कात् (?) ॥६॥

प्रमथमपि विद्वद्भिः प्रबन्ध एव एव तु (?) ।

संशोध्यः कृतपसारे भोजस्य मेदिनीपतेः ॥७॥

[ 4944 ]

**अन्तः**—अन्यदा श्रीवस्तुपालः ससंघः श्रीशत्रुञ्जये देवान् नत्वाऽग्रतश्चलन् देव-कपत्तने ययौ । अत्रान्तरे संघमध्ये सोमेश्वरपण्डितेनेदं काव्यमुक्तं वस्तुपालं प्रति, यतः—

लक्ष्मी प्रेयसिकेयमास्यशितिता वैकुण्ठकुण्ठोऽसि नो

नो जानासि पितुर्विनाशमसमं स[म्यक्]स्थितैः पांशुभिः ।

मा भैः भीरुगभीर एष भविताम्भोधिश्चिरं नन्दतात्

संघेशो ललितापतिर्जिनपतिस्नात्राम्बुकल्पं सृजन् ॥१॥

ततो वस्तुपालेन तस्य लक्षद्रव्यं दत्तं इति ॥ इति बप्पभट्टिप्रबोधितद्विजेन पठितं जिनस्तुतिकाव्यम् ।

[ 4945 ]

**अन्तः**—जैनागारसहस्रपञ्चकमतिस्फारं च पादातिकं
लक्षं श्रीजिनमूर्तयस्तु विहिताः प्रोत्तुङ्गमाहेश्वराः ।
प्रासादाः पृथिवीसल(?)ध्वजयुताः सार्द्धं सहस्रद्वयं
प्राकाराः परिकल्पिता निजधनैर्द्वात्रिंशदत्र ध्रुवम् ॥१॥
सत्रागारशतानि सप्त विमला वाप्यश्चतुःषष्टयः ।
उच्चैः पौषधमन्दिराणि सुमुहुर्जैनाश्च शैवा मठाः ।
विद्यायाश्च तथैव पञ्चशतिकाः प्रत्येकतः प्रत्यहं
पञ्चत्रिंशशतानि जैनमुनयो गृह्णन्ति राज्यादिकम् ॥२॥
वर्याशनानां च सहस्रमेकं तपस्विनां चेदमितः सहस्राः ।
दत्ताश्चतुर्विंशतिवासकुम्पा हेमारविन्दोज्ज्वलजादराणाम् ॥३ ।
शतत्रयं षष्टियुतं प्रपाणां सरोवराणां च शतद्वयं च ।
स्नानार्थकुम्भाक्षतषष्ठसिंहासननानां महिकापि संख्या ॥४॥
श्रीवस्तुपालकृतिसंख्यासरस्वती-कण्ठाभरणादि ॥२४॥

[ 4946 ]

**आदिः**—सुवर्णवर्णं गजराजगामिनं प्रलम्बबाहुं सुविशाललोचनम् ।
नरामरेन्द्रैः सुतपादपङ्कजं नमामि भक्त्या ऋषभं जिनोत्तमम्॥१॥
**अन्तः**—श्री[ मत् ]पूर्णिमापक्षीशां श्रीसाधुरत्नसूरीणाम् ।
आदेशं प्राप्य मुनिना राजमेरे( रु )णा निर्मिताम् ॥३॥
यः पठति शृणोत्येष धर्म्माश्चर्यमयां कथाम् ।
वृद्धिं समृद्धिं प्राप्नोति पार्श्वदेवप्रसादतः ॥
इति विक्रमचरित्रं सम्पूर्णमिति ॥
पण्डितश्री........तत्शिष्य........तत्शिष्यऋषिमुनिसौभाग्यलिखितम् ।

[ 4947 ]

**अन्तः**—श्रीकासद्रहगच्छनायकगुरुश्रीदेवचन्द्रप्रभु-
प्रोक्तो विक्रमसेनभूपमुकुटो राज्यं करोति स्थिरम् ।
श्रीमत्सुन्दरदेवमूर्त्तिरुचिरश्रीविक्रमक्षोणिभृत्-
पट्टाम्भोरुहभास्करः शशिकरप्रोत्कृष्टकीर्तिप्रियः ॥६२॥
इति श्रीकासद्र[ह]गच्छनायकप्रभुश्रीदेवचन्द्रसूरि[शि]ष्य-उपाध्यायश्रीदेवमूर्त्ति-विरचिते विक्रमचरिते महाकाव्ये सिंहासनद्वात्रिंशत्कथानिबद्धश्चतुर्दशः सर्गः समाप्तः ।

समाप्तं मार्ग्गशीर सुदि छ शुभं भवतु । संवत् १९६४ वर्षे मार्ग्गशिरमासे पुरणमा ( पूर्णिमायां ) लिपीकृतम् निर्वाणः सांमी नागौरमध्ये ॥

[ 4949 ]

**आदिः**—श्रीमहावीरनिर्वाणात् संवत् ४७० विक्रमनृपोऽभूत् । विक्रमोत्पत्त्यादिस्वरूपं लोकप्रसिद्धम् । कासहृद्गच्छीयदेवमूर्तिसूरिकृतविक्रमादित्यनव्यचरित्रादित्थं लिख्यते यथा—गूर्जरदेशे ताम्रवतीति प्रसिद्धे वेलाकूलपत्तने स लक्षः क्षमापतिः ० ।

**अन्तः**—इति विक्रमादित्योत्पत्तिसम्बन्धः ।

[ 4951 ]

**अन्तः**— सौभाग्यनन्दिसूरीन्द्रकृतेऽधिकारके [ ? शुभे ] ।
विमलस्य प्रबन्धेऽत्राधिकारोऽभूत्तुरीयकः ॥९॥
अष्ट-सप्त-तिथि(१५७८)प्रष्ठवत्सरे विक्रमार्कतः ।
कालुपुरे कथा कृताश्विनशुक्लाष्टमीतिथौ ॥१०॥

इति श्रीविमलस्य राज्याभिषेक-गुरूपदेश-प्रासादकरणप्रतिष्ठादितुर्योऽधिकारः ।

इति श्रीविमलचरित्रं सम्पूर्णम् ।

[ 4955 ]

**आदिः**— तथाहि—पूर्वं श्रीयुगादिजिनादेशा[ त् ] सपादलक्षप्रमाणं नानाप्रभावमन्दिरं श्रीशत्रुञ्जयमाहात्म्यं पुण्डरीकगणधरेण कृतमभवत् । ततश्च श्रीसुधर्मस्वामिना दुःषमाकालोत्पन्नप्राणिनः स्वल्पायुषः स्वल्पबुद्धित्वात् तदवगाहनासमर्थांश्च विज्ञाय तदनुग्रहार्थं श्रीवीरजिनाज्ञया पुनश्चतुर्विंशतिसहस्रप्रमितं चक्रे । तदनु च श्रीविक्रमात् सप्तसप्त(? प्य)धिकचतुःशतवर्षेषु ४७७ गतेषु वलभीपुरे अष्टादशमहानृपतिसेवितपादारविन्दश्रीशत्रुञ्जयोद्धारकारकसुराष्ट्राधिपतेः श्रीशिलादित्यनृपस्याभ्यर्थनया राजगच्छैकमण्डन-बौद्धमदखण्डन-स्याद्वादविद्याविशारदश्रीधनेश्वरसूरिभिः तस्मात् सारमुद्धृत्य दशसहस्रप्रमाणश्रीशत्रुञ्जयमाहात्म्यं कृतम् । तच्चाधुना प्रवर्त्तते, परं साम्प्रतं तु तत्रापि गम्भीरार्थतया प्रायो मादृशा मन्दबुद्धयो मुह्यन्ति । ततस्तेषां सुखावबोधाय वार्त्ताप्रायं गद्यमयं तदुल्लेखं लिखामि ।

**अन्तः**— इत्येष मयाऽल्पश्रुतेनापि मादृशानां अल्पश्रुतानां वाचनयोग्यं वार्त्ताप्रायगद्यमयं श्रीधनेश्वरसूरिकृतं मूलग्रन्थस्य उल्लेखरूपं श्रीशत्रुञ्जयमाहात्म्यं लिखितम् । यच्चात्र श्रुतविरुद्धं न्यूनाधिकं वा लिखितं तन्मे मिथ्यादुःकृतमस्तु । अथ ग्रन्थकृत्प्रशस्तिः—

अस्ति स्वस्तिपदं सदुन्नतिलसद्विस्तारिशाखाभरः
सच्छायो दृढमूलपद्धतिरनुच्छेद्यो दुरात्मव्रजैः ।

आह्लादैकनिकेतनं सुमनसां दुष्कर्मणां दुर्लभः
श्रीमानेष तपागणः सुरतरुः सर्वोत्तमो भूतले ॥१॥

तत्र जगज्जनविश्रुतगुणगणरत्नाकरा गभीरतराः ।
श्रीराजविजयसूरिप्रवराः श्रुतजलधयो स्वा(? यश्चा)सन् ॥२॥

श्रीरत्नविजयसूरिस्ततो बभूवातिविततविशदयशाः ।
श्रीहीररत्नसूरिस्तस्मादासीज्जगद्वन्द्यः ॥३॥

येनान्तरध्वान्तभरं गवां भरैर्व्यपास्य वैशद्यमतानि भूभृताम् ।
श्रीहीररत्नादिमसूरिरुच्चकैरपूर्वसूरो न मुदेऽस्तु कस्य वै ॥४॥

तपागणाम्भोनिधिपूर्णचन्द्रस्ततः किलासीज्जयरत्नसूरिः ।
श्रीभावरत्नाभिधसूरिरस्माज्जज्ञे जगज्जैत्रमहाप्रतापः ॥५॥

तत्पट्टशोभातिलकायमानः श्रीदानरत्नः किल सूरिराजः ।
विराजते सम्प्रति सत्प्रभावः प्रभाभरोद्भासिमुखारविन्दः ॥६॥

श्रीहीररत्नसूरिमुख्याः शिष्यास्तु पण्डितप्रख्याः ।
श्रीलब्धिरत्नविबुधाः सुधामुधाकारिमधुरगिरः ॥७॥

श्रीसिद्धिरत्नवाचकवर्य्याः पर्यायचारुतरचर्य्याः ।
पाठकपदप्रतिष्ठास्ततोऽभवन् हर्षरत्नाह्वाः ॥८॥

श्रीलक्ष्मीरत्नाह्वास्तदाश्रयाः सकलपण्डितप्रवराः ।
श्रीन्या(ज्ञा)नरत्नपाठकमुख्याश्च ख्यातविशदगुणाः ॥९॥

तत्पादपङ्कजामलमधुव्रतो हंसरत्नमुनिरेनम् ।
श्रीमति राजद्रङ्गे प्रसादमासाद्य पार्श्वविभोः ॥१०॥

शत्रुञ्जयमाहात्म्योल्लेखं व्यलिखद् विचार्य सुगमार्थम् ।
नयन-वसु-तुरग-हिमकर(१७८२) वर्षे चाक्षयतृतीयायाम् ॥

मतिमान्द्यादनाभोगादितोऽत्र वितथं तु यन्मया लिखितम् ।
तच्चोपकारनिरतैः शोध्यं मध्यस्थगीतार्थैः ॥

प्रत्यक्षरगणनायामनुष्टुभां ग्रन्थमानमिह गदितम् ।
अष्टावेव सहस्राः शतानि पञ्चापि सार्द्धानि ॥ ग्रन्थाग्रन्थ-८५५० ।

सर्वश्रेयोमूलं भवदवनिर्वापणाम्बुधरपटलम् ।
सम्पद्वल्लिविवर्द्धनमिदमर्हच्छूवसितं जयतात् ॥

इति श्रीशत्रुञ्जयमाहात्म्योल्लेखे श्रीजावडश्रेष्ठ्यादिविहितश्रीशत्रुञ्जयोद्धारादिवर्णनो नाम पञ्चदशोऽधिकारः । सम्पूर्णोऽयं शत्रुञ्जयमाहात्म्योल्लेखनामा ग्रन्थः । समाप्तानि सकलपण्डितप्रवरशिरोमणिपण्डित ५ श्रीसुन्दरविजयगणि–तत्शिष्यपण्डितश्री५श्रीपद्मविजयगणि–त० पण्डित श्रीरुचिविजयगणि–शिष्यश्रीगुरुपदकजमधुकरमिव पं०सुजाणविजयेन लिखिता स्ववाचनार्थे । संवत् १८२४ वर्षे चैत्र वदि ६ भृगौ श्रीसुरतिबंदिरे-वाचि(च्य)मानं चिरं जीयात् ।

[ 4958 ]

**अन्तः–** सकलभट्टारकश्री १०८ श्रीश्रीहीरविजयसूरि–तत्शिष्यपण्डितश्री ५ कमलविजयगणि–तत् शिष्य पं० श्रीमानविजयगणि–तत्शिष्य पं०श्रीहस्तिविजयगणि–शिष्यपं०श्रीकुंअरविजयगणि–तत्शिष्य पं०तत्त्वविजयगणि–तत्शिष्य पं०दर्शनविजय गणि–तत्शिष्यपं०श्रीकान्तिविजयगणि–तत्शिष्यपाप(द)रज्ज(जो)रेणुसमान पं०नायकविजयगणि–शिष्य पं०प्रेमविजयगणिभ्रातृजीतविजयवाचनार्थम् ।

संवत् १७९६ वर्षे फागण सुदि १ वार रवौ कांठामध्ये साबरतटे ध्रुनातटमध्ये लिष(खि)तं पं०नायकेन श्रीसरस्वतीप्रसादेन ।

[ 4960 ]

**मू०अन्तः–** इत्याचार्यश्रीधनेश्वरसूरिविरचिते श्रीशत्रुञ्जयमहातीर्थमाहात्म्यान्तर्भूत-श्रीरैवताचलमाहात्म्ये श्रेष्ठिश्रीजावडविहितश्रीशत्रुञ्जयोद्धारवर्णनो नाम षोडशसर्गः षष्ठः सर्गः समाप्तः । ग्रन्थाग्रम् १२००० ।

अथास्मिन्नृपकुलतिलकविक्रमार्क्कसंवत् अभ्र–सिद्धि-स्यष्टि (१७८९) वर्षे मासोत्तममागसिरमासे वदिपक्षे षष्ठीतिथौ गुरुवासरे सार्द्धप्रहरदिन चढते लिपिकृतं शत्रुञ्जयटबार्थः । ।

श्रीपूर्णिमापक्षे भीमपल्लीयशाखायां वाचनाचार्यवाणारीष श्री५श्रीदेवसुन्दरजी–वा०श्रीकल्याणसुन्दरजी–वा०श्रीलब्धिसुन्दरजी–वा०श्रीसोमसुन्दर(जी)–तत्शिष्य पं०-श्रीमहिमासुन्दरजी–पं०श्रीदीपसुन्दर–चेलाफतेचंद माणकचंदपठनार्थं जालोरनगरे ।

[ 4962 ]

**अन्तः–** पूर्णः पार्वणसोमसुन्दरगुणस्यानन्दिरत्नत्रयी-
दीप्रश्रीगुरुधर्मघोषचरणद्वन्द्वारविन्दालिनः ।
प्रोढावन्तीविरत्नमण्डनमणेः श्रीपेथडस्य श्रुतिः
स्वादिष्टः सुकृतादिसागर इति ख्यातप्रबन्धोऽभवत् ॥३२॥

द्भव्यः श्रीगुरुनन्दिरत्नचरणाम्भोजालितां भेजुषा
विद्यामण्डितपण्डितप्रभुसुधानन्दैरदोषीकृतः ।
तन्द्रावतीतविनीतनन्दिविजयप्रादुष्कृताद्यप्रति-
ग्रन्थः सद्भिरयं मरुत्परिमलन्यायेन विस्तार्यताम् ॥३३॥

इति युगोत्तमगुरुश्रीसोमसुन्दरसूरिपट्टालङ्कारश्रीरत्नशेखरसूरिविनेयपण्डितप्रकाण्ड-नन्दिरत्नगणिश्चरणरेणुरत्नमण्डनरचिते मण्डनाङ्के सुकृतसागरे श्रीपेथडसुतश्रीझांझणप्रबन्ध-कथनो नाम अष्टमस्तरङ्गः ।

संवत् १९१९ ना श्रावण २ द्वीतीयें तथी ४ थी वार भोमे लपीकृतं पं०-सागरी श्री ५ पारविशेषरजीजी—तत्[शिष्य]षीमाशेखरजीजी—तत्शिष्यजयशेखरजीजी—तत्शिष्य गुणशेखरजीजी-तत्शिष्य द्वौ नाम कुन्तीशेखरजी कौमुदशेखर-तत् चे० भवानजी-पठनार्थं श्रीकच्छदेशे गामरताडीया गणेसवाले रेवास श्रीदक्षणदेशे संगमनेर पासुन आकोंलाकछबे राजूर बालभाचे दौ चतुरमास करते श्रीजिनप्रासाद बन प्रतिष्ठितः लं० पं०-कौमुदशेखरजी मास २ श्रावणे सुद ४ वार भोमे ।

स्त०अन्तः—३३ इति सम्पूर्णताधिकारे इम युगमां उत्तम एहवा गुरु श्रीसोम-सुन्दरसूरिने पाटे आभूषणश्रीरत्नशेखरसूरि तेहना शिष्य पंडितशिरोमणि नंदिरत्नगणि तेहना चरणनी रज सरिसो रत्नमंडित(डन)गणिइं रच्यो, मंडनअंके सहित सुकृत-सागर नामे श्रीपेथडपुत्रश्रीझांझणप्रबंध कहेवारूप आठमो तरंग थयो ।

संवत् १९१९ ना श्रावण बीजा वद ४ वार भोमे लिपीकृतं पं०कौमुद-शेखरगणि आत्मार्थम् ।

[ 4963 ]

आदिः—सर्वभीतिविनाशार्थं सर्वसौख्यैककारणम् ।
स्तम्भनेन्द्रमुखं पश्ये सर्वदा सर्वतोमुखम् ॥१॥
शासनाचारसूरीणां वैपक्ष्यं यत्र जायते ।
सूरिश्रीमेरुतुङ्गस्य मिथ्यादुष्कृतमस्तु मे ॥२॥
मदीयं वितथं वाक्यं सत्यं वा वेशकोऽपि किम् ।
प्रायः प्रमादिनां यस्माद् दुष्षमायां वचोऽमृतम् ॥३॥

येन सूरिश्रीमेरुतुङ्गेण इत्थं चतुर्दिक्षु गलगर्ज्जिः प्रतन्यते स्वदर्शनप्रसादात् । अन्यच्च—अहं चतुर्विधस्य श्रीसङ्घस्य कृतनतिर्बद्धाञ्जलिर्वर्त्ते । सर्वथा निर्जरार्थं देवस्तुति-वाक्यमात्रं अभिनवग्रन्थारम्भं चैनं श्रयामि । कुब्ज इव नृत्यं वितन्वन् विद्वद्भिरशेषै-रुपहास्यमानोऽपि ठुण्ट इव कण्डकविमोचनक्रीडादुर्ल्ललितः ॥

तथापि श्रद्धामुग्धोऽहं नोपालभ्यः स्खलन्नपि ।
विशृङ्खलापि वाग्वृत्तिः श्रद्दधानस्य शोभते ॥
भक्तिं निश्चित्य चित्तेऽहं यथाज्ञातं तथा वचः ।
रचयामि प्रबन्धेषु प्रसादं कुरु वाणि! मे ॥

अन्तः—इति अमन्दजगदानन्ददायिनि आचार्यश्रीमेरुतुङ्गविरचिते देवाधिदेव-माहात्म्य-शास्त्रे श्रीस्तभननाथचरित्रे द्वात्रिंशत्प्रबन्धबन्धुरे द्वात्रिंशत्तमः प्रबन्धः समर्थितः । समाप्तं चेदं श्रीस्तम्भ[न]नाथचरितम् ॥

स्वस्ति श्रीनृपविक्रमकालादेकोत्तरे कृतिम् ।
चतुर्दशशते वर्षे रवियोगे त्रयोदशे ।१॥
कार्तिकमासे राकायां गुरुवारे स्थिरोदये ।
कल्याणकारणं स्तम्भनाथस्य चरितं मुदा ॥२॥
सूरिश्रीमेरुतुङ्गेण वादिहव्यकृशानुना ।
वादिवेश्याभुजङ्गेन श्वेतवस्त्रांह्रिरेणुना ॥३॥
येनेदं पठ्यते सर्वसमक्षं राजपर्षदि ।
अङ्गीकृत्य प्रतिज्ञानां सप्तकं च सुदुर्वहम् ॥
सभायां बाहुमुद्धृत्य जिनशासनवैरिणः ।
एकया वेलया सर्वे म्रियन्ते जयवादिना ॥

अन्यच्च— दम्भाद् बोद्भटवादिशेखरमतोपन्यासविन्यासत-
श्छेदाम्युच्छदन्धकारपरशुर्वादीन्द्रवेश्यापतिः ।
स्याद्वादार्थविरोधिसुन्दरशिरःसंचारपञ्चाननः
पत्रालम्बनमातनोति जगति श्रीमेरुतुङ्गो गुरुः ।
यस्येत्थंकीर्तिर्विलसति विदुषां मुखेषु । अन्यच्च—
इहोत्सूत्रं भवेत् किञ्चित् प्रमादात् पतितं मम ।
शोधयन्तु कृपां कृत्वा तदवद्यं बहुश्रुताः ॥१॥

संवत् १४२४ वर्षे भाद्रपदकृष्णतृतीयायां गुरौ श्रीस्तम्भनेन्द्रप्रबन्धपुस्तकं लिखितम् । तपस्विगच्छनायकश्रीरत्नसागरसूरि-शिष्यगणिमिश्रपद्मकीर्तेः पण्डितमिश्रसाधु-मूर्तिमिश्राणामुपरोधेन भक्त्या च ।

तत्त्वसार्थकसमाधिजन्मभिस्तापसैर्मुनिभिरस्ततामसैः ।
साम्प्रतं च विकले कलौ युगे शासनं जिनपतेर्विभूषितम् ॥

शारदेन्दुकिरणैकसोदरैः साधुमूर्तिविलसद्गुणाकरैः ।
कं नरं विबुधवर्गशेखरं नो न रञ्जयति रङ्गसागरः ॥
नभ इव नभो विशालं सागर इव सागरस्तु गम्भीरः ।
श्रीमदभयदेवगुरोः तव तप इव तव तपो जयति ॥

[ 4969 ]

**आदिः**— उद्यन्माणिक्यमालाबहलतरमिलन्निर्यदङ्कूरपूर-
ध्वस्तध्वान्तप्रतानाप्रतिमविरचितानुत्तरोत्तानचैत्यम् ।
काञ्चिल्लक्ष्मीं जगाहे जलनिधिवसनाम्भोधिशायि प्रियाया-
श्चूडारत्नं महिपः शिरसि विनिहितं जहुनाभीभुवेव ॥१॥

**अन्तः**— यस्मिन्नुर्जस्वलश्रीक्षपितघनतमःकोटिविस्पष्टरोचिः
सौवर्णस्तम्भमालाशितिमणिकिरणश्रेणिमिश्रान्तरालाः ।
श्रीमत्स्याद्वादिगेहे पुलकयति तनू कौतुकालोककानां
बिभ्राणा नीलवासो दिवसपतिसुता प्रत्यनीका इवैते ॥१०३॥

[ 4971 ]

**आदिः**— भूत्यै तद्दिव प्रमाणपटुभिर्गीभिर्न यत् पार्यते
संकल्पैर्बहुधा न यत् कलुषतां नीतं मनाग् मानसैः ।
पर्यायैर्विविधैर्यदभ्युपगतं स्वाभीष्टदं सिद्धये
प्रज्ञालैः सदलङ्कृदक्षरमथ व्याधाति जैनं महः ॥१॥

**अन्तः**— अथ यावदहर्पतिशीतलरश्मिर्विश्वोपकारकृद् विजयते ।
नन्दतु हृद्दृपूतपौषधशाला तावदियं वरपौषधशाला ॥३७॥

[ 4972 ]

**अन्तः**— आसीच्चण्डपमण्डितान्वयगुरुर्नागेन्द्रगच्छश्रिय-
श्चूडारत्नमयत्नसिद्धमहिमा सूरिर्महेन्द्राभिधः ।
तस्माद्विश्वसनीयचारुचरितः श्रीशान्तिसूरिस्ततो-
प्यानन्दामरसूरियुग्ममुदयच्चन्द्रार्कदीप्रद्युतिः ।६९॥
श्रीजैनशासनवनीनवनीरवाहः श्रीमांस्ततोऽप्यघहरो हरिभद्रसूरिः ।
विद्यामदोन्मदगदेष्वनवद्यवैद्यः स्यातस्ततो विजयसेनमुनीश्वरोऽयम् ॥७०॥
गुरोस्तस्याशिषां पात्रं सूरिरस्त्युदयप्रभः ।
मौक्तिकानीव सूक्तानि भान्ति यत्प्रतिभाम्बुधौ ॥७१॥

एतद्धर्मस्थानं धर्मस्थानस्य चास्य यः कर्त्ता ।
तावद् द्वयमिदमुदियादुदयत्यर्यमर्बुदो यावत् ॥७२॥
श्रीसोमेश्वरदेवश्चुलुक्यनरदेवसेवितांह्रियुगः ।
रचयाञ्चकार रुचिरां धर्मस्थाने प्रशस्तिमिमाम् ॥७३॥
श्रीनेमेरम्बिकायाश्च प्रसादादर्बुदाचले ।
वस्तुपालान्वयस्यास्तु प्रशस्तिः स्वस्तिमालिनी ॥७४॥

सूत्रधारकेल्हणसुत–धांधा(ध)लपुत्र–चण्डेश्वरेण प्रशस्तिरियमुत्कीर्ण्णा श्रीविक्रमात् संवत् १२८८ वर्षे फागुणवदि ३ रवौ श्रीनागेन्द्रगच्छे श्रीविजयसेनसूरिभिः प्रतिष्ठा कृता ॥

इति श्रीअर्बुदाचले मं०वस्तुपाल–तेजपालकृतप्रासादप्रशस्तिः सम्पूर्णा ।

लिखिता च संवत् १७४२ वर्षे फाल्गुनमासे कृष्णपक्षे त्रयोदश्यां श्रीअवरंगपुरीयश्रीजयसिंहपुरामध्ये पण्डितश्रीहर्षविजयगणि–शिष्यपं०प्रीतिविजयगणिना सकलपण्डितोत्तमपण्डितश्रीरङ्गविजयगणि–शिष्यमु०श्रीउदयविजयवाचनाय ।

[ 4981 ]

**अन्तः–** इयं प्रशस्तिकाशिका समस्तदुःखनाशिका ।
रसज्ञतुष्टये कृतत्रिपाठिबालकृष्णकैः ॥१॥
आसीदेको द्विजेन्द्रः सकलगुणनिधेः पारदृश्वेश्वरश्च
यत्पृथ्वीतलमौलिप्रकटितचरणश्चाह गोरक्षशर्मा ।
सिद्धिः सर्वज्ञबुद्धिर्जगति जगन्नाथविख्यातिपन्नः
शाण्डिल्यः काञ्चनास्यः प्रथि० ॥

[ 4992 ]

**वृ०आदिः–** श्रीपार्श्वजिनमानम्य गोपेज्यं दशजन्मकम् ।
पृथ्वीराजः शुभां वल्लीं विवव्रेऽर्थफलाप्तये ॥१॥
गुणिनो बहवः सन्ति संस्कृतज्ञाः महाशयाः ।
परं प्राकृतलोकोक्तिभाषास्वल्पधियो बुधाः ॥२॥
तेषां प्रार्थनयाऽऽरम्भो मया स्वमतिसारतः ।
हर्षप्रकर्षमाश्रित्य कृतो ब्राह्मचनुभावतः ॥३॥
लाक्षाभिधेन भाषायां चतुरेण विपश्चिता ।
चारणेन कृतो बालावबोधोऽर्थसुलब्धये ॥४॥
परं न तादृगर्थोक्ति पटुत्वं वितनोत्ययम् ।
न संस्कृतवाग्युक्त्या टीकामेनां करोम्यहम् ॥५॥ चतुःश्लोकैः सम्बन्धः ।

**वृ०अन्तः--** इति श्रीकृष्ण-रुक्मणीवेलिः पृथ्वीराजकृता समाप्ता तत्र कदाऽयं-ग्रन्थः संजातस्तत्कथयति ग्वालकः--

वरस अचल गुण अंग ससि संवति (१६३८) तवीउ जस करि श्रीभरतार ।
कीर श्रवणे दिनराति कंठ करि, पांमइ श्रीफल भगत अपार ॥ इति सुगमम् ॥

इति सम्पूर्णयमस्याः टीका सुबोधमञ्जरीनाम्ना । अथ च टीकायाः प्रशस्तिरवधार्या--

श्रीराठोडकुलावतंसविलसत्कीर्त्तिमहादानकृत्
कल्याणाभिधभूपतिः समभवत् श्रीविक्रमाख्ये पुरे ।
यत्सूनुर्गुणिनां वरो न तु पृथु(थ्वी)राजो महीमण्डले
विख्यातः सुरसद्गुरूपममतिर्नीत्यां कविः सत्कविः ॥१॥

लक्ष्मीनायकभक्तितत्परतया कृत्वा गुणोत्कीर्त्तनं
वल्लीसंज्ञमिदं स्वपातकचयं हत्वा फलं जन्मनः ।
प्राप्तं येन सुतीर्थवन्मधुपुरि प्रान्ते पदं मौक्तिकं
लब्धं तस्य कृतेः कृता च मयका टीका सुबोधाभिधा ॥२॥

श्रीमद्विक्रमराजतो वसु-मुनि-क्रौञ्चारितुण्डाऽवनी--
संख्ये संवति तुर्यमास्यधिकतां प्राप्ते सिते पक्षके ।
प्राक्तिथ्यामुशनोऽह्नि पाल्हणपुरे पेरोजनाम्ना नृपे
राज्यं शासति पद्मसुन्दरगुरोः शिष्येण टीका कृता ॥३॥

सारङ्गाभिधवाचकेन सुतरां शिक्षावचश्चातुरी--
मङ्गीकृत्य सुशिष्यवर्गकथनं श्रुत्वा तथेति कृतम् ।
अस्मिन् यद् वितथं वचोविवरणं संशोध्य शुद्धाशयै-
स्तत्सत्यं क्रियतां ममाञ्जलिमिमं दृष्ट्वा सुहृष्ट्यार्थिभिः॥४॥ चतुर्भिः सम्बन्धः ।
श्रुतो न कर्तुर्मुखतः कदाचित् लोकोक्तपाठोऽपि न भाति तादृक् ।
श्रुताश्रुतोऽयं रचितो मयाऽऽर्थो विशोधनीयो विबुधैर्वरेण्यैः ॥५॥
सुबोधमञ्जरीनाम्नी टीका प्रकृतिकारणम् ।
गुणिनामार्थवत्येषा चिरं नन्द्यात् सुसौख्यदा ॥६॥

इति सुबोधमञ्जरीटीका सम्पूर्णा । ग्रन्थाग्रं सूत्रसमेतं १९५१ मानम् ।

**मू०अन्तः--**इति वल्लिः समाप्ता । संवत् १७०६ वर्षे आसो सुदी दसमी १० भोमवासरे । बा० प्रतापपठनार्थः ॥१॥

[4998]

**वृ० आदिः**--श्रीपार्श्वं फलवर्द्धिकादभुतमहाराजं महोराजितं

त्रिकृत्वः सुकृतैकभाजनमहं नत्वा कृपावारिधिम् ।

सारं श्रीगुरुराजपादकमलं चानन्दसंवर्द्धकं ।

संवक्ष्ये विवृतिं यथा मतिमतां खण्डप्रशस्तेः शुभाम् ॥१॥

**अन्तः**--इति श्रीगुणविनयविरचितायां खण्डप्रशस्तिवृत्तौ कल्क्यवतारहरिस्तुति-व्याख्या इति दशावतारव्याख्यानेन समर्थिता श्रीखण्डप्रशस्तिवृत्तिः ।

विद्यावारिधि-रस-शशधर(१६४३)मितवर्षे विक्रमार्कभूभर्तुः ।

श्रीमत्खरतरगच्छे श्रीमज्जिनचन्द्रसूरिवरे ॥१॥

विजयिनि विजितानेकोद्भटकटुसदवादिवादिसंदोहे ।

सूरिः श्रीजिनमाणिक्यपट्टपूर्वाद्रिमार्त्तण्डे ॥२॥ युग्मम् ।

आसंच्छ्रीक्षेमशाखासु सुधातुलफलोपमाः ।

अभिषेकपदप्रौढाः क्षेमराजा यतीश्वराः ॥३॥

श्रीभारतीप्रतिममन्मतिमद्विचाराः शास्त्रार्थसार्थवरनारधिलाश्च पाराः(?) ।

प्रापुः प्रदीप्तपदवीमपि यद्विनेया श्रीपाठका निपुणवादिभिरप्यजेयाः ॥४॥

शिवसुन्दरनामानः कनकाह्वाश्च सत्तमाः ।

यन्मुखाम्भोजमासाद्य कमला मुमुदेतराम् ॥५॥ युग्मम् ।

साधव्याः वाचना भव्या अशोभन्त शुभोदयाः ।

श्रीदयातिलकाश्चात्र वैराग्यरससागराः ॥६॥

प्रमोदमाणिक्यगणिप्रधानाः शिष्याः पुनर्वाचकताभिधानाः ।

राजन्ति तेषां करुणावधानास्तच्छिष्यदक्षा विदितार्थतानाः ॥७॥

माधुर्यसारैर्वचनप्रकारैर्जिग्युः सुराचार्यमपीह तारैः ।

जयन्तु ते श्रीजयसोमशिष्टाः सुपाठकास्ते गुरवो गरिष्ठाः ॥८॥

येषां प्रसादेन मया विदृष्ट्वा स्वबोधवृद्ध्यै विततार्थसारा ।

खण्डप्रशस्तेर्विवृतिर्वरेण्या प्रसद्य शोध्या च बुधैर्मयेयम् ॥९॥

इति श्रीपण्डितशिरोरत्नश्रीजयसोमगणि--शिष्यपण्डितगुणविनयगणिभिर्विरचिता श्रीखण्डप्रशस्तिवृत्तिः सुबोधिकानाम्नीति श्रीफलवर्द्धिकाधीशश्रीपार्श्वनाथप्रसादाच्चिरं पाठक-श्रोतृसुखदायिनी स्तात् ।

राभस्यात् किञ्चिदज्ञानाद् यद्विरुद्धमवादि तत् ।

नोपेक्षणीयं किन्त्वेतद्विशोध्यं विबुधैरिह ॥१॥

श्रीजिनकुशलसूरिरस्तु सुखाय नित्यशः । ग्रन्थाग्रम् २२३६० ।

[ 4999 ]

**अन्तः–** इति श्रीगङ्गालहरी सम्पूर्णा भवति ।

इति श्रीजगन्नाथत्रिशूलिविरचिता गङ्गालहरी समाप्ता ।

[ 5005 ]

**आदिः–** निचितं खमुपेत्य नीरदैः प्रियहीना हृदयावनी[र]दैः ।

सलिलैर्निहितं रजःक्षितौ रविचन्द्रावपि नोपलक्षितौ ॥१॥

**अन्तः–** आलभ्य चाम्बु तृषितः करकोशपेयं भावानुरक्तवनितासुरतैः शपेयम् ।

जीयेत येन कविना यमकैः परेण तस्मै वहेयमुदकं घटखर्परेण ॥२३॥

**टी०अन्तः–**गणानां प्रभुं पार्वतीमुख्यपुत्रं दितेः सूनुना शापयुद्धे स्थितं च ।

तुरीयं भुजं धारयन्तं भजे तं तथा श्रीधरं त्वष्टमूर्तेः सुतं च ॥१॥

पाठं विना मया टीका पद्यानां द्विशतान्विता ।

निर्वैरैर्भूमिदेवानां वृन्दं नत्वा च सद्गुरून् ॥२॥

क्षेमंकरप्रपौत्रेण यम्बूज्ञातेन वौकसा ।

बालकृ[ष्ण]स्य पुत्रेण कुशलाख्येन धीमता ॥३॥ युग्मम् ।

श्रीपतिर्ज्योतिषां मध्ये योऽभूच्छ्रेष्ठो हि शर्मभाक् ।

तस्य पौत्रेण टीकेयं कृता श्रेष्ठाभिभावदा ॥३॥

केवलकृष्णस्तनयो वैद्यराजसभोचितः ।

परशुरामपूज्यश्च तेनासौ रचिता शुभा ॥४॥

दोषः स्फुरत्येव किमत्र चित्रं सतां स्वभावाद् गुणलेखितोऽपि ।

चेतोऽत्र तुष्येत् किमु तत्र चित्रं समाप्ता च घटकर्परीनाम टीका

( ? टीका समाप्ता घटकर्परीति ) ॥५॥

भू-बाणाष्टक-भूम्यब्दे (१८५१) आषाढे मेचके शनौ ।

प्रतिपदायां मूलर्क्षे पूर्णाऽभूत् घटखर्परी ॥६॥

इति घटखर्परीनामधेया कुशलसिंहेन विरचिता भयहरपुरे समाप्ता लिखिता १८८० मार्गशिरवदि ६ शनौ बिहारीऋषिणा शुभम् ।

[ 5017 ]

**टी० अन्तः–** एवं विलोमाक्षरकाव्यकर्तुर्भूयांसमायासमवेक्ष्य तज्ज्ञाः ।

जानन्त्विमां चित्रकवित्वसीमां दैवज्ञसूर्याभिधसंप्रदिष्टाम् ॥३८॥

इति श्रीदैवज्ञसूर्यपण्डितविरचिता विलोमकाव्यटीका संपूर्णा १८८२ आश्विन-वदि ४ लिपीकृतं विहारीऋषिणा शुभम् ।

[ 5019 ]

वृ० अन्तः– इति षट्पदकाव्यस्य ग्रन्थाः श्लोकसङ्ख्या ३०० ।

चेला जीवा लषिता च वृत्तिर्मतिशालिभिः ।

विदधे बुधबोधाय श्रीजिनप्रभसूरिभिः ॥

[ 5032 ]

अन्तः– संवत् नन्द-बाण-मुनि-चन्द्र(१७५९)वर्षे ज्येष्ठाद्यपक्षे एकादश्यां तिथौ सूर्यवासरे पं० श्रीक्षमासुन्दरजी-तच्छिष्यपं०नेमभद्रपठनार्थम् ।

(अपरलिपिकारेण लिखितमिदम्–) श्रीहाजीषांनडे(डे)रामध्ये ।

[ 5035 ]

वृ० आदिः– नत्वाहं परमात्मानं आयमिलमयान्वितम् ।

मेघदूतस्य काव्यस्य कुर्वे टीकां सुबोधिकाम् ॥१॥

अस्य काव्यस्य कर्त्ता कविः कालिदासः कालिकालब्धवरः शालकेन पृष्टः सन् 'अस्ति कश्चिद् वाग्विशेषः ? ।' अस्योपरि ग्रन्थचतुष्टयमकार्षीत् । 'अस्ति' इत्यनेन कुमारस्य कार्त्तिकेयस्य संभवो जन्म तत्सूचकं 'कुमारसंभवाख्यं' काव्यं कृतवान् । 'कश्चिद्' इत्यनेन च मेघदूताभिधं मेघ एव दूतत्वेन संदेशहारित्वात् प्रतिपादितस्तस्य सम्बन्धं प्रतिपादकं मेघदूताभिधं काव्यम् । 'वाग्भिः' रघुवंशसूचकं 'रघुवंशाख्यं' काव्यम् । 'विशेषः' इत्यनेन षड्ऋतुवर्णनशास्त्रमिति ।

इति मेघदूतटीका ।

वृ० अन्तः– मेघदूतस्य काव्यस्य मे[घरा]जेन साधुना ।

[टी]काकृतेरमालोक्य(?) कृता सुखबोधिका ॥१॥

श्रीमेघदूतकाव्यटीका सुखबोधिकानाम्नी सम्पूर्णा ॥

[ 5037 ]

आदिः– शारदां च गुरुं नत्वा मेघदूतावचूरिका ।

सुमतिविजयेनेयं क्रियते सुगमान्वया ॥

अन्तः– इदं कथं महाकाव्यमुच्यते ? इह यद्यपि गिरि-नदी-सरः-कमलाकर-वसन्तोत्सव-मलयानिल-[जल]क्रीडासुव्यावधर्पं(?)चन्द्ररूपोदया पुष्पावचय-सूर्योदया-स्तमयसर्गबन्धादीनां महाकाव्यलक्षणानामभावस्तथापि महाकविकालिदासकृतत्वादिदं महाकाव्यमुच्यते ॥ इति श्रीमेघदूतावचूरिका समाप्ता ।

राजरञ्जनदक्षाश्च पाठकाः मुनिमण्डले ।
जीयासुः सुधनाः शश्वत् श्रीमद्विजयमेरवः ॥१॥
सुमतिविजयनेयं विहिता सुगमान्वया- ।
ऽवचूरिः शिष्यबोधार्थं तेषां शिष्येण धीमता ॥२॥

[ 5034 ]

**अव० आदिः**—पण्डितोत्तमपं० श्रीउदयसौभाग्यगणिगुरुभ्यो नमः ।
**अव० अन्तः**—इति श्रीमेघदूतकाव्यस्य टीका समाप्ता ।

पण्डितोत्तमपण्डितचक्रचूडामणिपण्डितश्रीविशालसौभाग्यगणि-शिष्यपण्डितमुकुटायमानपण्डितश्रीशङ्करसौभाग्यगणि-शिष्यपण्डितश्रीउदयसौभाग्यगणि—शिष्यमुनिसूरसौभाग्येन लिखितं राणीग्राममध्ये । संवत् १६९५ वर्षे जे(ज्ये)ष्ठमासे शुक्लपक्षे सप्तम्यां तिथौ बुधघस्रे ।

**मू० अन्तः**— इति श्रीकालिदासकृतौ मेघदूतकाव्यं संपूर्णमुत्सवेन परिपूर्णं कृतम् । संवत् १६९५ वर्षे ज्येष्ठमासे शुक्लपक्षे सप्तम्यां तिथौ बुधघस्रे लिपीकृतम् । मु० सूरसौभाग्यलिखितम् ।

[ 5041 )

**अन्तः**— इति श्रीकालिदासकृतौ मेघदूताभिधानं क्रीडाकाव्यं सम्पूर्णमिति ।
स्वस्ति संवत् १५८४ वर्षे आषाढादिकार्तिकमासे कृष्णपक्षे त्रयोदश्यां तिथौ जीवासरे श्रीआगमगच्छे पण्डितश्रीउदयधर्माणां शिष्येण रत्नतिलकाभिधानेन देहावटे निवसता श्रीमेघदूतस्य पुस्तकमिदमलेखि । आत्मनोऽध्ययनायान्येषामप्युपकारायाध्ययनसंवृद्धये लिखितमेतत् ।

मीयतां कथमभीप्सितमेषां दीयतां द्रुतमयाचितमेव ।
तं धिगस्तु कलयन्नपि वाञ्छामर्थिवागवसरं सहते यः ॥१॥
याचमानजनमानसवृत्तेः पूरणाय बत जन्म न यस्य ।
तेन भूमिरतिभारवती न द्रुमैर्न गिरिभिर्न समुद्रैः ॥२॥
मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी ।
गतिस्तयोरेकजनस्तु मर्दयन्नहो विधे ! त्वं करुणा रुणद्धि न ॥३॥
धिगस्तु तृष्णातरलं भवन्मनः समीक्ष्य पक्षान्मम हेमजन्मनः ।
तवार्वण(र्णव)स्येव च तुषारसीकरैर्भवेदमीभिः कमलोदयः कियान् ॥४॥

तव वत्मनि वर्त्ततां शिवं पुनस्तु त्वरितं समागमः ।
अयि साधय साधयेप्सितं स्मरणीयाः समये वयं वयः ॥५॥

[ 5042 ]

**टि०अन्तः—** इति श्रीमेघदूतमहाकाव्ये० ।

भट्टारकेन्द्रभट्टारक श्री१०८ श्रीराजकुशलजीविद्यमाने चेला धर्मकुशलेनालेखि श्रीभुजपत्तने संवत् १८६७ ना वर्षे धवलपक्षे वैशाखमासे चतुर्थ्यां तिथौ शुक्रवासरे लिपीकृतम् ।

[ 5043 ]

**अन्तः—** इति श्रीकालिदासकृतौ मेघदूताख्यं काव्यं सम्पूर्णम् ।

सं० १५१३ वर्षे कार्त्तिकसुदि १२ रवौ मेदिनीन दनदिने अद्येह श्रीमदण-हिलपुरपत्तने श्रीकुतबविजयराज्ये श्रीपूर्णिमापक्षीयश्रीजयप्रभसूरिणा शिष्यपूर्णकलश-पठनार्थं स्वपाणिना मेघदूताख्यं काव्यं लिखितमिति शुभम् ।

[ 5044 ]

**अन्तः—** इति श्रीकालिदासकृतौ मेघदूताख्यं काव्यं संपूर्णं लिखितं मुनि-[ कृष्ण ]विजयेन ।

इत्थंभूतं सुचरितमतं मेघदूताभिधानं
कामक्रीडाविरहितजने विप्रयोगे विनोदः ।
मेघस्याऽस्मिन्नऽतिनिपुणता बुद्धिभावः कवीनां
नत्वार्यायाश्चरणकमलं कालिदासश्चकार ॥

इति श्रीकालिदासकृतं मेघदूताभिधानं काव्यं समाप्तम् ।

संवत् १७६२ वर्षे चैत्रमासे कृष्णपक्षे एकादश्यां तिथौ सकलपण्डितोत्तम-शिरोमणि, पं०श्रीभीमविजयपादाब्जचञ्चरीकेण इदं विरहिसुखजननमिदं काव्यं लिपी-कृतं शोधितं च ॥

[ 5048 ]

**आदिः—** अत्र श्रीकालिदासः वर्षाकालमाश्रित्य विप्रलम्भरसं वर्ण[य]न्निदमाह ।

**अन्तः—** वेद-चन्द्र-शर-भू(१५१४)प्रमितेऽब्दे कार्त्तिके धवलकामवासरे ।
श्रीभटीमनगरे सुनागरे पञ्जिकाविरचितोचिता मिता ॥१॥
साहाय्यं विदधे राजकमलोऽपि मह्यमसौ ।
लिलिखे प्रथमा विवृतिर्येन हर्षप्रकर्षतः ॥२॥

इति श्रीबृहद्गच्छे श्रीरत्नप्रभसूरि-शिष्यवाचकश्रीलक्ष्मीनिवासविरचिता मेघदूत-काव्यस्य शिष्यहितैषिणी नाम्नी टीका सम्पूर्णेति ॥ इति श्रीमेघदूतमहाकाव्यवृत्तिः-सम्पूर्णा जाता । पं० हितकुशलोऽलिखत् श्रीजीर्णदुर्गे ।

[5049]

**आदिः**— जिनं नाथं जितक्रोधं जिनभद्रगुरुं तथा ।
नत्वाऽर्थदीपिकां टीकां क्षेमहंसः परां ब्रूते ॥

**अन्तः**— गुरूत्तमश्रीजिनभद्रसूरिपादप्रसादात् प्रथितः प्रतिष्ठः ।
ग०क्षेमहंससुगुणिश्चकार० ................॥

[ 5051 ]

**अन्तः**— इति श्रीमेघदूताभिधानकाव्यस्य टीका सम्पूर्णा ।

सकलपण्डितश्री ५ श्री पं०श्रीकेसरसागरगणि शिष्य पं०श्रीजयन्तसागरगणि—तत्शिष्यमुनिजुगतसागरगणि—शिष्यपं० माणिक्यसागरेण शिष्यधनरूपसागरगणि-शिष्यचेला गोरधनलिखिता । संवत् १८४८ सा वर्षे कार्त्ती सुदि १४ गुरुवारे शुक्लपक्षे श्रीरस्तु श्रीभिन्नमालनगरे ।

[ 5106 ]

**आदिः**— लीलालिकेलिनिलयं रसरञ्जितसर्वविश्वमतिविभवम् ।
पद्मासूनुं नत्वा रहस्यषट्त्रिंशिकां वक्ष्ये ॥१॥
ललितकाननकुञ्जगृहं गता रहसि गोपवधूरसुरद्विषः ।
समणि वीक्ष्य विचित्रमुरस्थलं क्रुधमगात् किमभूदिह कारणम् ॥२॥

दूहा— प्रथम नमी गुरुपदकमल मन उच्छरंग महंत ।
भावछत्रीसी दूहरा खरा करूं धरि खंति ॥

**अन्तः**— इति ललितवृत्तभेदैः रचिता षट्त्रिंशिका सुभावानाम् ।
साऽङ्गेण सरङ्गं विबुधैः शोध्या विचिन्त्य हृदि ॥
संवति शर-मुनि-धरणिप(१६७५)मङ्ख्ये मासे शुचौ विशदपक्षे ।
तिथिपञ्चम्यां कुजदिने विरच्य विलिलेख शास्त्रमिदम् ॥३९॥
श्रीपद्मसुन्दरगुरुप्रसादतो वाचकेन निजबुद्ध्या ।
सारङ्गेण विबुधवरकौतुककृत्यै कनकदुर्गे ॥४०॥ युग्मम् ।

दूहा— संवत सोल पंच्योतरइ सुदि आषाढ सुमास ।
पंचमी तिथि कुजवार परिलिखिता चित्त उल्लास ॥१॥

संस्कृतवाणी रचित गुण लोक न समजत लेस ।
तस अनुसारी बहुतरी सह उत्तर सुविसेस ॥२॥
दूहा वाचत सुणत दिल रहइ सुजन जनरंग ।
श्रीगुरुपाउ प्रसादतः सुपरि रची **सारंग** ॥३॥
**कमधजवंसी** किंत्तिवर राजा **सूर** सुराज ।
पुर **जावालपुरिं** प्रगट शास्त्र कीध सुखकाज ॥४॥
अविचल जां द्रू सूर ससि थापित निजनिज थांन ।
तां लगइ भावबहुत्तरी युगति वखाणहु जाण ॥५॥

इति **भावषट्**त्रिंशिका सदोग्धका सम्पूर्णा ।

[5108]

**आदिः**— श्रीशङ्खेश्वरपार्श्वेशं स्मृत्वा केवलशालिनम् ।
**भाग्यपञ्चाशकं** वच्मि सिद्धिसम्पत्तिहेतवे ॥

**अन्तः**— इत्थं श्रीमद्**मीझराह्वयवर**श्रीपार्श्वभास्वत्प्रभा-
प्राग्भारेण निरस्कृते धनमसे(?) मोहोद्गते मानसाद् ।
वाचा सिद्धिरियं प्रसिद्धिमचलामायातु मायातुला
लक्ष्मीकीर्त्तिजयप्रभुत्वसहिता नित्यं यतः प्रेघते ॥२१॥

इति श्री**पुरुषभाग्यपञ्चाशिका** सम्पूर्णा ।

[ 5115 ]

**मू० अन्तः**— श्रीलूङ्काख्यगणे गणीश्वरगुरुर्श्री**केशवान्त**स्थितः
शिष्येणाशु कृतं वरं निजधिया दृष्टान्तकानां शतम् ।
छन्दोऽलंकृति-शब्दशास्त्ररहितं काव्यं यदा निर्मितं
तत् सर्वं मुनि**तेजसिंहगणि**ना धीरैर्विशोध्यं वरैः ॥१०२॥

इति श्री**दृष्टान्तशतकं** सम्पूर्णम् ।

**संवत्** १७७१ वर्षे शाके १६७६ प्रवर्त्तमाने अघ(आग्रहायण)मासे **कृष्णपक्षे** ९ नवमीभृगुवासरे लिखितं **पुष्पवतीनगरे** सम्पूर्णं कृतम् ।

[ 5116 ]

**स्त० अन्तः**— श्री**लौंका**गच्छना नायक आचार्यश्री ६ श्री **केशवजीनें नवमे** पाटे उद्योतकारी तेहना अन्तेवासी सदा समीपें रह्या एहवो शिष्यः । **तेम**(? ज)-**सिंहनामा** तिणे कीधौ पोताना बुधी करीनें १०० द्रष्टांत १०० काव्य तेह मध्यें जे ते कांई छंद अलंकार व्याकरण विरुद्ध सब्द आव्यौ हुए अजांणपणै ते शब्द जाणीइ

जे कोइ धीर पण्डित हुए तेणै सुधी करवो पिण गुमान करि निंदा न करवो । पंडितइ सुध करवुं प्रवर्त्तावबुं । इति ग्रंथाग्रंथ ७००।१०१।१०२।

इति दृष्टान्तशतकं सम्पूर्णं श्रीसुरतबंदरे लिपीकृतम् ।

संवत् १८५५ नाना वर्षे शाके १७२० ना प्रवर्तमाने आसुमासे कृष्णपक्षे भोमवासरे लिपीकृतं तिथौ पञ्चमीदिने संपूर्णम् ।

[5118]

**अन्तः**— इति श्रीदृष्टान्तशतकं सम्पूर्णम् ॥

भोग्यङ्गमुन्यब्जमिते (१७६८) वर्षे हर्षेण मृगसिरमासे ।
नवम्यां कर्मवाटयां च लिखितं शुक्रवासरे ॥१॥

[5120]

**अन्तः**— तस्माज्जातः मुजातो निजगुणमणिभिः प्रीणिताशेषलोकः
कोकाहङ्कारकारिस्मितमहितमुखश्छाकवंशावतंसः ।
भाति श्रीनागराजो परनृपतिशिरा दर्शितोऽथ सतापे
राजेतेयं समेते विगलितकलहे वाचि पद्मालया च ॥९८॥

इति भावशतं समाप्तम् । सं० १५२९ ।

[5123]

**मू० अन्तः**— सहृदयहृदयेष्वेते भावाश्चमत्कृतिकारिणो
घनतररसा वासाय स्युः सरोजदृशामिव ।
कमलविजयप्राज्ञस्यासीत् प्रसत्तिरथापहा
मम कृतवतो हेतुर्येषां श्रियामिव सङ्ग्रहम् ॥
भूपालभालमणिकोटिनिघृष्टपादपाथोजहीरविजयव्रतिराजराज्ये ।
सद्भावभावशतकं रचयाञ्चकार हर्षेण हेमविजयो निजबुद्धिवृद्धौ ॥

इति भावशतकं समाप्तम् । लिषतं भोजिग(भोजक) कान्हा ।

[5135]

**वृ०अन्तः**—चक्रे भर्तृहरिकृतां यस्यामतिसविस्तराम् ।
रामर्षिर्विवृतिं काव्यविदां चित्तप्रसत्तये ॥१॥

इति श्रीमहामुनीन्द्रभर्तृहरिकृतौ वैराग्यशतकटीका सम्पूर्णाऽलेखि । संवत् १८०२ वर्षे मासोत्तममासि नभसि मासि राकायां कर्म्मवाटयां शिती(ते)तरपक्षे श्रीपूज्य-श्रीआचार्यवर्यश्रीजगजीवनजिद्विजयराज्ये नींबडीग्रामे चातुर्मासिकं कुर्वति ।

[5142-44]

**अन्तः**— श्रीमत्सर्वार्थसिद्धया मणिस्रजि मतिना रत्नकानि धृतानि
नानाशास्त्राकरेभ्यः श्रुतश्रुतविधिनोन्मथ्य तानि स्थितानि ।
प्रोद्यत्श्रीवेगडाख्यागगनदिनमणीनां गणीनां सुशिष्यैः
शिष्यानामर्थसिद्धयै जिनकररविभिः शोधनीयानि विद्भिः ॥१॥
शीघ्रगत्या यथा पत्री लिख्यतेऽत्राप्यसौ मया ।
टीका शतकशास्त्रस्य शोधनीया सतां गुणैः ॥२॥
वैराग्यशतकाख्यस्य टीकायां जिनसमुद्रैः ।
सर्वार्थसिद्धिमालायां प्रकाशस्तृतीयो मतः ॥३॥

इति श्रीश्वेताम्बरसूरिशिरोमणिपरमार्हतशासनगगनाङ्गणदिनमणिः भट्टारकश्रीजिनेश्वरसूरीणां पट्टे युगप्रधानपूज्यपरमपूज्यदेवश्रीजिनचन्द्रसूरीश्वराणां शिष्येण भट्टारकश्रीजिनसमुद्रसूरिविरचितायां श्रीभर्तृहरिणा वैराग्यशतकटीकायां सर्वार्थसिद्धिमणिमालायां तृतीयः प्रकाशोऽयं सम्पूर्णोऽजनि ।

[5143]

**वृ० आदिः**— श्रीमन्महाधिपतिमालवदेशराजश्रीविक्रमाख्यनृपतेरनुजोऽस्त्यसौ वै ।
तेनोत्तमं विरचितं शतकत्रयं तत् सर्वार्थसिद्धिमणिमालिकनाम टीका ॥
शिष्यप्रशिष्यस्य प्रबोधनार्थं आत्मप्रबोधाय तथैव सम्यक् ।
सतां प्रबोधाय यथार्थनामा करोति श्रीजि(? जै)नसमुद्रसूरिः ॥

[5145]

**आदिः**— इति श्रीश्वेताम्बरसूरिशिरोमणिश्रीयुगप्रधानशाखायां श्रीसौधर्मिकगच्छे परमार्हच्छासने संविज्ञपक्षे श्रीमद्बृहत्पूर्णखरतरकृष्णवेगडबिरुदे मुख्यशोधनसंज्ञायां चन्द्रान्वये भ० श्रीजिनवल्लभसूरिसन्ताने भ० श्रीजिनचन्द्रसूरीश्वराणां शिष्यश्रीजिनसमुद्रसूरिणा विरचिते वैराग्यभावनाशतके चतुरध्यायेषु महापुरुषाणां वर्णनार्थाधिकारेऽध्यायः प्रथमः ।

प्रणम्य जिनचन्द्रार्हान् सिद्धान् सूरिजिनेश्वरान् ।
वैराग्यभावनासत्कं शतकं कीर्त्तयाम्यहम् ॥१॥
पूर्वं शतप्रबन्धे च रचिताऽस्ति शतत्रयी ।
श्रीभर्तृहरिणा राज्ञा तेषां टीका कृता मया ॥२॥
सर्वार्थसिद्धिमाला वै संज्ञा तस्याः प्रतिष्ठिता ।
तस्याश्चोद्द्योतनार्थं मे कृतोऽयं च परिश्रमः ॥३॥

व्याख्यानार्थं कथानां च शिष्याणां हितहेतवे ।
आत्मचित्तप्रबोधार्थं सुबोधार्थं महोद्यमः ॥४॥
षट्दर्शनभाषाज्ञः ज्ञानधारी उदारवान ।
तथ्याप्यर्हन्मतेनैव कीर्त्यते सर्वसङ्ग्रहात् ॥५॥
संप्रत्येवास्ति क्षेत्रेऽस्मिन् भारते चार्यखण्डके ।
श्रीजिनवल्लभः सूरिः पट्टे श्रीजिनचन्द्रजे ॥३३॥
वैरङ्गिकः श्रीजिनवल्लभाह्वः पुनः गुरुः श्रीअभयादिदेवः ।
महातपस्वी जिनदत्तसूरिः सक्तत् प्रभो ! जीवनग्रासधारी ॥१॥
. . . . . भिधवर्धमानः सूरीश्वरोऽभूच्चरमप्रधानः ।
तत्पट्टधारी भुवनैकवीरो जिनेश्वरः सूरिगुणैः सधीरः ॥२॥
जिनाद्यचन्द्रोऽभयदेवसूरिः क्रमेण सूरिर्जिनवल्लभाख्यः ।
तत्पट्टधारी कृतविद्यसूरिः युगप्रधानो जिनदत्तसूरिः ॥३॥
पत्तिर्जिनाद्यस्तत्पट्टचन्द्रः श्रीचन्द्रपट्टे प्रवरो मणीन्द्रः ।
जिनेश्वरः श्रीकुशलादिसूरिः क्रमेण श्रीश्रीजिनचन्द्रसूरिः ॥४॥
श्रीवेगडेत्याख्यगणस्य कर्ता संपूर्णबुद्धाख्यखरस्य धर्ता ।
तरान्त्यशब्दाभिधगच्छनेता जिनेश्वरः सूरिरभूच्च नेता ॥५॥
श्रीशेखराख्यो जिनधर्मसूरिस्ततः परं श्रीजिनचन्द्रसूरिः ।
श्रीमेरुपट्टे सुगुणावतारो गुणप्रभः सूरिगुणैरुदारः ॥६॥
जिनेश्वरस्तस्य विनेय एव तत्पट्टधारी जिनचन्द्रदेवः ।
युगप्रधानो सुगुणैः प्रधानस्तत्पट्टधारी सुविराज्यमानः ॥७॥
सूरेः श्रीजिनचन्द्राह्वगुरोः शिष्येण चाग्रहात् ।
टीका शतकशास्त्रस्य कृता भाषामयी शुभा ॥८॥
शिष्याणां सेवकानां च गृणाति(?) सूत्रिता) श्रीजिनाब्धिना ।
सर्वार्थसिद्ध्याश्राख्यायाः मणिमाला मनोहरा ॥९॥ युग्मम् ।
पूर्णचन्द्राब्धिपक्षाख्यप्रमिते वीरवत्सरे ।
पूर्ण-वेद-मुनीन्दु(? १७४०)वत्सरे विक्रमाह्वये ॥१०॥
कार्त्तिक्यां शुक्लपूर्णायां दिने जीवे सुयोगके ।
उरगाख्यस्य साहस्य वादे कर्णपुरे तथा ॥११॥
श्रीअनूपमहाराजराज्ये श्रीराष्ट्रकौटिके ।
तीर्थे श्रीवीरनाथस्य पार्श्वे देवगिरेस्तथा ॥१२॥

आरब्धा तु मया तत्र संपूर्णाऽपि कृता तथा ।
चतुःषष्टिदिनैरेषा भूयात् कल्याणकारी च ॥१३॥
नीति-शृङ्गार-वैराग्यादिकारैः त्रिशतैः शुभैः ।
त्रिवर्गमयत्रिस्कन्धा रचितेयं मया शुभा ॥१४॥
धर्मार्थ-कामसंसिद्धा निबद्धा सुदृढाम्बरा ।
धारयन्ते हि ये कण्ठे तेषां कल्याणकारिणी ॥१५॥
संस्कृता प्राकृता देशी क्वचिदन्याऽपि कीर्त्तिता ।
ग्वालेरदेशजा भाषा सर्वतोऽस्यां धृता स्रजि ॥१६॥

क्वचित् संस्कृता प्राकृता चान्यदेशी परं सर्वतः देशग्वालेरजाता ।
प्रथितासिगले (स्रग् गले) धार्य्यतां ज्ञानभूषा बुधैरेव ज्ञात्वा मया(यो)[क्ता]र्थसिद्धयै ॥१७॥

यावद्धरा-विधु-चन्द्रार्क-मेरु-सागर-पर्वताः ।
तावन्नन्दतु ग्रन्थस्तु सर्वार्थमणिमालिकम् ॥१८॥
श्रीसौधर्म्मे गणे पट्टधारी श्रीवीरशासने ।
युगप्रधानश्रेण्यां तु सूरिः श्रीजिनवल्लभः ॥१९॥
गच्छे युगप्रधानस्य श्रीसौधर्मिकसंज्ञिकम् ।
पूर्णसत्यसभार्हं च वेगडामुखरोधनम् ॥२०॥
प्रसिद्धोऽयं समाख्यातः सामाचार्य्यत्र वर्तते ।
स्वयं सर्वैस्तु ज्ञातव्यो [? पट्टक]ज्ञानसङ्ग्रहात् ॥२१॥
पट्टे श्रीजिनचन्द्रस्य सूरेर्विजयी गुरुस्ततः ।
प्रसादाच्च कृता पूर्णा श्रीजिनाब्ध्यादिसूरिणा ॥२२॥

[ 5146 ]

**अन्तः**— इति श्रीभर्तृहरिराजकवीश्वर--कीधो, दूजो शृङ्गारशतक संपूर्ण हुओ । संवत् १८५३ माह वदी १० दिने । पं०प्रेमविजयगणि--पं०श्रीदर्शनसत्कस्य इदं पुस्तकमस्ति । श्रीगी(गिरि)पुरनगरे रावलश्रीश्री१०८ श्रीफतेसिंहविजयराज्ये ।

(अन्याक्षरैर्लिखितमिदम्—)

पं०लालविजयजी न्यानसत्कनी प्रत छे । श्रीविजयदेवसूरि तपागछमें ।

[ 5153 ]

**अन्तः**— विश्वंभरेति—सोमेश्वरदेवनामा पुमान् श्रीरामभद्रस्य यशःप्रशस्तिं चकार । कीदृशः यामार्द्धनिष्पन्नमहाप्रबन्धः, यामस्य प्रहरस्य अर्द्धेन निष्पन्नो महाप्रबन्धो यस्मात् स तथा । कीदृशस्य रामभद्रस्य विश्वंभरामण्डलमण्डनस्य भूमण्डलाभरणस्य ।

संवत् १५८६ वर्षे श्रावण सुदी १० गुरुवासरे । अथ रणस्थम्भमध्ये लिषितं राजाधिराजमहाराजश्रीश्रीविक्रमसाहिलिखितं ठाकुरब्रह्मदासु कायस्थमाथुरः ॥ [इति] रामशतकटीका समाप्ता ।

[ 5161 ]

**वृ०अन्तः**– सिन्दूरप्रकराख्यस्य व्याख्यायां हर्षकीर्त्तिभिः ।
सूरिभिर्विहितायां तु सामान्यप्रक्रमोऽजनि ॥१॥
तपोगणे नागपुरीयपूर्वे श्रीचन्द्रकीर्त्याह्वयसूरिराजाः ।
तेषां विनेयो [? जिन ]हर्षकीर्त्तिः सूरीश्वरो वृत्तिमिमामकार्षीत् ॥२॥

इति श्रीप्रक्रमः । इति श्रीसिन्दूरप्रकरणं समाप्तम् ॥ संवत् १८५१ना वर्षे वैसाख वदि ४ शनौ ।

[ 5192 ]

**अन्तः**– संवत् १८९८ प्रवर्त्तमाने मासोत्तममासे कृष्णपक्षे चतुर्थ्यां तिथौ चन्द्रवासरे दिने लिपीकृता । उपाध्यायश्रीक्षमाविमलजी–तत्शिष्यमुख्यवा०श्रीसुखहेमजीगणि–तत्शिष्य वा०माणिक्यहंसजीगणि–तत्शिष्यमुख्य वा०क्षिमाविलासजीगणि–तत्शिष्य पं०प्रच्छा[ कु ]सलोजी–तत्शिष्य पं०देवराजस्य(स्य) अर्थे लिखिता पीचुंदग्रामे चतुर्मासीं चक्रे ।

[ 5164 ]

**अन्तः**– मलधारिगणाधीशगुणनिधानसूरयः ।
तत्पट्टाम्बुजसंलीनश्रीगुणकीर्त्तिसूरिणा ॥१॥
कृतेयं वल्लभा टीका सुशिष्याय महामते ।
वाच्यमाना चिरं नन्द्याद् भविकानां बोधहेतवे ॥२॥ लि०राजकीर्त्तिः ॥

[ 5165 ]

**अन्तः**– इति सूक्तिमुक्तावलीकाव्यटीका समाप्ता ।

संवत् १६ सह एकासीया(१६८१) वर्षे मृगसिर सुदि त्रयोदसी शुक्रवारे वा०श्री तेजसारगणि–तत्शिष्यवा०श्रीरत्नकुशल–तत्शिष्य पं०लाभनन्दनमुनिपठनार्थम् ।

[5168]

**अन्तः**–संवत् १५०८ वर्षे मागसिरसुदि प्रतिपदा बुधवारे श्रीखरतरगच्छे भट्टारक श्रीजिनसिंघ(ह)सूरिपट्टे चारित्रचूडामणिपद्मावतीवरलब्धश्रीजिनप्रभसूरि[स्तद्] अनुक्रमे-श्रीजिनसमुद्रसूरि – तत्पट्टमण्डनचारित्रचूडामणिकलिकालनिष्कलङ्कभविकजनमनरञ्जनश्री - जिनतिलकसूरिभिः श्रीदशपुरनय(ग)रे श्रीसिन्दूरप्रकरकाव्यबालावबोधनार्थेटीका विहिता पण्डितहर्षतिलकगणीनां अभ्यर्थनया ।

[ कालान्तरे केनचिल्लिखिता प्रशस्तिरियम्- ]

स्वच्छातुच्छतरे महत्खरतरे गच्छे गुणग्रामणीः
श्रीमान् श्रीजिनचन्द्रसूरिरभवत् सौभाग्यभाग्याम्बुधिः ।
तत्पट्टोदयशैलमौलिमहिमाहेलिः कलावानभूत्
सूरिः देवसूरिमतिः क्षितौ जिनसमुद्राख्यः क्षमाकक्षकृत् ॥१॥
तत्पादपद्ममधुपैः श्रीमज्जिनतिलकसूरिभिः क्लृप्ता ।
ऋज्वीति पञ्जिकेयं सिन्दूरप्रकरकाव्यस्य ॥२॥
वसु-गगन-बाण-चन्द्र(१५०८)वर्षे सितमार्गभूतिथौ रम्याम् ।
अभ्यर्थनावशादिह श्रीवाचकहर्षतिलकस्य ॥३॥ त्रिभिर्विशेषकम् ॥

[ 5170 ]

**मू०अन्तः**— इति श्रीसोमशतकं सम्पूर्णम् ।

गच्छाधिराजश्रीहीरविजयसूरीश्वर—तत्शिष्यपण्डितश्रीज्ञानविजयगणि—तत्शिष्य-मेघविजयेन लिपीकृतम् । गच्छाधिराज–तपस्तेजदिनकरश्रीहीरविजयसूरीश्वर—तत्शिष्य पण्डितोत्तमपण्डितश्रीज्ञानविजयगणि—तत्शिष्यमेघमुनिलिपीकृतायां श्रुत्वा अर्थम् ।

**अव०अन्तः**— इति श्रीसिन्दूरप्रकरण—अवचूरिः समाप्ता ।

पण्डितश्रीज्ञानविजयगणि—तत्शिष्यमेघविज(येन) लिपीकृता ।

संवत् १६४२ वर्षे आसो वदि बीज दिनेति भद्रं आदित्यवारे श्रीनविन्नगरे लिखितम् ।

[5171]

**अन्तः**— अजितदेवाचार्यपट्टोदयाद्रिद्युमणिविजयसिंहाचार्यपादारविन्दे ।
मधुकरसमतां यस्तेन सोमप्रभेण व्यरचि मुनिपरा या सूक्तिमुक्तावलीयम् ॥९६॥
इति सिन्दूरप्रक्रमः समाप्तः ।

[5176 ]

**अन्तः**— इति श्रीधर्म्मोपदेशकाव्यानि समाप्तानि । संवत् १९२६ ना पोस मासे शुक्लपक्षे तिथौ षष्ठयाम् । ल०पाटणमध्ये महासुखरामः । शिवशंकर ॥ इदं पुस्तकं लेबडीना पाडामध्ये सा०जीवाजी प्रति पोतानी छे ॥

[ 5180 ]

**अन्तः**— इति श्रीमन्मयूरपण्डितविरचितं सूर्यशतकं सम्पूर्णम् ॥

शिष्यस्तयोः शिक्षितशास्त्रसा........शुभंयुः ।
स्तोत्रं वर्षे रवेरेष लिलेख हर्षाद् ।
अक्षयतृतीयादिनसादि........घनौघवेलाकूले ।

[ 5186 ]

**आदिः**— अनाद्यनन्तरूपाय पञ्चवर्णात्ममूर्त्तये ।
अनन्तमहिमाप्ताय सदो[ङ्]कार ! नमोस्तु ते ॥१॥

नाद्यन्ते, सूत्रधारः—आदिष्टोऽस्मि ब्रह्मकमलसागर—**ब्रह्मकीर्त्तिसागराभ्यां सकलागमवारिधिचन्द्रावताराणां सरस्वतीगच्छशृङ्गारहाराणां श्रीमन्मूलसङ्घोदयाद्रिप्रकटनप्रभाकराणां** चञ्चच्छिखिशिखण्डशोभितकरकमलानां त्रिविधचक्रवर्त्तिनां **दिगम्बरशिरोमणीनां श्रीमत्प्र**भाचन्द्रसूरीश्वराणां शिष्यै[र]स्मद्गुरुभिश्च **श्रीमद्वादिचन्द्रसूरिभि**र्निर्माय **ज्ञान**सूर्योदयं नाम नाटकं प्रदत्तमासीत् तत्सभ्यानां पुरतोऽभिनेतव्यम्, **अस्ति** चाधुना सर्वेषां कुतूहललालसं चेतः । इति प्रस्तावनापीठिका ।

**अन्तः**— **मूल**सङ्घे समासाद्य **ज्ञान**भूषं बुधोत्तमाः ।
दुस्तरं हि भवाम्भोधिं सुतरं मन्वते हृदि ॥८०॥

काव्यम्— तत्पट्टामलभूषणं समभवद् दैगम्बरीये मते
चञ्चद्बर्हकरः स भाति चतुरः श्रीमत्प्रभाचन्द्रमाः ।
तत्प[ट्]टेऽजनि वादिवृन्दतिलकः श्री**वादि**चन्द्रो **यति**-
स्तेनायं व्यरचि प्रबोधतरणिर्भव्याब्जसंबोधनः ॥८१॥

वसु-वेद-रसाब्जाङ्के (१६४८) वर्षे माघे सिताष्टमीदिवसे ।
श्रीमन्मधूकनगरे सिद्धोऽयं बोधसंरम्भ[ः] ॥८२॥

इति सूरिश्री**वादि**चन्द्रविरचिते **ज्ञान**सूर्योदयनामनाटके चतुर्थोऽध्यायः ॥४॥
मिति माह शुक्ला २ भौमवासरे संवत् १९४६ ।

[ 5194 ]

**अन्तः**— इति श्री**ठक्कुरमाइन्द्रदेव**—सुत**जिनदेव**विरचिते **स्मरपराजये सुसंस्कृतबन्धे मुक्तिस्वयंवरो** नाम पञ्चमः परिच्छेदः ॥५॥

साद्यन्तं यः शृणोतीदं स्तोत्रं स्मरपराजयम् ।
तस्य ज्ञानं च मोक्षं स्यात् स्वर्गादीनां च का कथा ॥१॥

तावद् दुर्गतयो भवन्ति विविधास्तावन्निगोदस्थिति-
स्तावत् सप्त सुदारुणा हि नरकास्तावद्दरिद्रादयः ।
तावद् दुःसहघोरमोहतमसा च्छन्नं मनः प्राणिनां
यावन्मारपराजयोद्भवकथामेतां च शृण्वन्ति न ॥२॥

तथा च—शृणोति वा वक्ष्यति वा पठेद् बुधः कथामिमां मारपराजयोद्भवाम् ।
असंशयं वै लभतेऽक्षयं सुखं शीघ्रेण कायस्य कदर्थनं विना ॥३॥

यथा च—अज्ञानेन धिया विना किल जिनस्तोत्रं मया यत् कृतं

किं वा शुद्धमशुद्धमस्ति सकलं नैवं हि जानाम्यहम् ।

तत् सर्वं मुनिपुङ्गवाः सुकवयः कुर्वन्तु सर्वे क्षमां

संशोध्यां सुकथामिमां स्वसमये विस्तारयन्तु ध्रुवम् ॥४॥

॥ इति मदनपराजयं समाप्तमिति । ग्रन्थसङ्ख्या ११६५ ॥

संवत् १९४७ ज्येष्ठशुक्ला १० गङ्गादशमीदिने लिपीकृतं जोसी देवकृष्णः जयपुरमध्ये माधवराज्ञ आज्ञां वर्त्तते स्म ।

[ 5195 ]

**अन्तः**— इति श्रीहनुमद्विरचिते महानाटके रामविजयो नाम चतुर्दशोऽङ्कः ॥१४॥

[ 5196 ]

**अन्तः**— इति श्रीयशश्चन्द्रमुनिविरचितं मुद्रितकुमुदचन्द्रप्रकरणं अपरनाम-मुद्रितकुमुदचन्द्रनाटकं समाप्तम् ।

[सं]वत् १७९८ मित वर्षे श्रीमदणहिल्लपुरपत्तने श्रीढण्ढेरपाटके श्रीमत्पूर्णिमा-गच्छीयप्रधानशाखीयभट्टारकश्री ५ श्रीमहिमाप्रभसूरीश्वरचरणाम्भोजभ्रमरायमानभट्टारक-श्रीभावप्रभसूरिभिरलेखि पुस्तकमिदम् । शुभं भवतु श्रीश्रमणसंघस्य । श्रीवर्धमानजिनः । श्रीश्यामलपार्श्वनाथः श्रीकलिकुण्डपार्श्वनाथः एते जिनवराः सदा तुष्टिं पुष्टिं कुर्वन्तु सकलविघ्नवातं हरन्तुतराम् ।

प्रघोषतः किञ्चिद्भिन्नापि वार्त्ता श्रूयते, तथाहि—कुमुदचन्द्रः पत्तने समागतः, न कोऽपि अनेन सार्धं वादं कर्त्तुं समर्थः, तदा सिद्धराजनृप-मन्त्रिभ्यां विचार्य यतिवसतिषु चारिपुलकं जलगर्गरीभाजनं मोचापितम् । माणिक्येन मोच्यमानं निवारितम् । देवसूरि-कुमुदचन्द्राभ्यां परस्परवैतालिकमोचनं सूक्तकथनम् । नृपसभायां पणबन्धः, कुटिलं न कर्त्तव्यं, केशानां गुच्छत्रयं वादिदेवसूरेः कण्ठे निक्षिप्तं, उद्दाल्य निष्काश्य सभ्येभ्यो दर्शितम् । पुनर्जल्पः कुमुदचन्द्रः स्त्रीकृतं पुण्यं पुण्यं न भवति । तदा देवसूरिः मात्रा मींढ(मीन)लदेव्या पोट्टलिकानां चतुर्लक्षमितकरो मोचापितः । पुनर्जल्पः कुमुदचन्द्रः—

केवलि हुउ न भुंजइ चीवरसहियस्स नत्थि निव्वाणं ।

इत्थि हुया न सिज्झइ मयमेयं कुमुयसूरिस्स ॥१॥

केवलि हुउ वि भुंजइ चीवरसहियस्स अत्थि निव्वाणं ।

इत्थि हुया वि सिज्झइ मयमेयं देवसूरिस्स ॥२॥

देवसूरिः—कोटिकोटिहारितो दिगम्बरः ।

कुमुदचन्द्रः—(माणिक्यं प्रति) बोल खीचडी खाधी, तर्क पीतम्।

माणिक्यः—नग्नाटराट् ! जरातरलमते ! खीचडी भक्ष्या भवति, षीचडी सा बुद्धिर्न भवति। तर्कं श्वेतं भवति, तर्कं पीतं न भवति। स्वर्गे देवाः किं वदन्ति ॥३॥ अस्य कुमुदचन्द्रस्य द्विपञ्चाशत्पलप्रमाणं शीर्षं वर्त्तते, वाचस्ततो मुद्रिताः। इति बोल४।

युष्माकं अस्माकं जैनेन्द्रव्याकरणमूर्वा इति सूत्रेण मकारलोपः प्रत्ययान्तशब्दत्वात्।

कवित्त— बंभ अट्ठ न बौद्ध भगव अट्ठारस जित्तीअ
शैव सोल दह भट्ट सत्त गंधव्व वि जित्तीअ।
जित्त दिगम्बर सत्त च्यार षित्ती दो जोईय
इक ढीवर इक भिल्ल धरणि पाडिय इक भोईय
ता कुमुदचंद जित्ता सवे जां अणहल्लपुरिं नावीउ।
वडगच्छतिलयपहु देवसूरि कुमुदचंद मद उत्तारिउ ॥१॥
च्यार जोड नीसाण हय सय पंच पंच्यासी
इग्यारसय सुहड सीस एगसउ ब्यासी।
बलदह सइं च्यार च्यारसइं भिच्च चिडुत्तर
अट्ठ कोडि पणवीस दम्म दोइ लक्ख बिहुत्तरि
तां छत्त चामर टोडर बिरद सुखासण वाहण चिलेउ।
वडगच्छतिलयपहु देवसूरि नग्गो वलि नग्गो कीउ ॥२॥
कुमुदचंद दक्षण पयंड छ दर्शण संतावइ
अणहल्लपुरि संपत्ति तिहिं डहि पुगा वजावइ।
मुणिवर बंभ शैव सविहू सिरिं षेड घलावइ
कोइ न अत्थि समत्थि जास सामत्थि म बोलावइ
निवडंत सयल गुज्जर धरवि देवसूरि दिट्ठि पडी।
बोलंता बोल न ऊपडी जिम मंकड डालइ चडी ॥३॥
देवसूरिप्रभोः साम्यं कथं स्याद् देवसूरिणा।
वादविद्याविदोऽद्यापि लेखशालां न मुञ्चति ॥१॥
यदि न कुमुदचन्द्रं नाजेष्यद् देवसूरिरहिमरुचिः।
कटिपरिधानमधास्यत् कतमः श्वेताम्बरो यतिः ॥२॥
दिवा प्रकाशते भानुः किंचिन्निशि निशाकरः।
सदा प्रकाशते विश्वे देवसूरिप्रभोः प्रभा ॥३॥

काव्यम्– आशावासः समयसमिधां संचयैः श्रीयमाने
श्रीनिर्वाणोचितशुचिवचश्चातुरी चित्रभानौ ।
प्राजापत्यं प्रथयति सति सिद्धराजे जयश्री-
र्यस्योद्वाहं व्यधित सदा नन्दताद् देवसूरिः ॥४॥

इति मुद्रितकुमुदचन्द्रनाटके किञ्चित्शेषभिन्नवार्त्ता लिखिता लेशतः । श्रीः ।

[ 5202 ]

**अन्तः**– इति निष्क्रान्ताः सर्वे विद्याधरचक्रवर्त्तित्वलाभो नाम पञ्चमोऽङ्कः ।
धवलयति कलाभिर्यावदिन्दुस्त्रिलोकीं हरति तिमिरभारं भानुमानेष यावत् ।
अभिनवचरितार्थं नाटकं तावदेतत् प्रथयतु जगति श्रीदेवचन्द्रस्य कीर्त्तिम् ॥१॥
. जीयाज्जैनमतान्तरिक्षतरणिः प्रज्ञाहुताशारणिः
लीलोन्मुद्रितशेषभाष्यसरणिः श्रेयःसुधासारणिः ।
सर्वाकारपरोपकारविपणिः श्रीचित्रचिन्तामणिः
श्लोकाविष्कृतकीर्त्तिधौतधरणिः श्रीदेवचन्द्रो गणिः ॥

[ 5205 ]

**अन्तः**– महाकइणो सिरिरायसेहरस्स सट्टयं सम्मत्तं ॥

संवत् भुवनशताधिकपक्षवर्षे मधुमासे असितपक्षे पञ्चम्यां तिथौ पिङ्गलवासरे अद्येह श्रीमदणहिल्लपत्तने गूर्जरज्ञातीयमहं सारंगसुतवीरमपठनार्थं पुस्तिकेयमलेखि ।

(अन्यदीयहस्ताक्षरैरुल्लिखितमिदम्–)

मन्त्रिसाङ्गाकेन गूर्जरज्ञातीयेन कर्पूरमञ्जरी प्रकरणपुस्तिका जिनहर्षगणीनां अर्पिता कुमरगिरौ । .

[ 5207 ]

**अन्तः**– इति श्रीकर्पूरमञ्जरीसाटकावचूरिः समाप्तितां निन्ये ।

सकलसकलप्रासरूपमौलिमौलिमणिरुचिरञ्जितांह्रियमलपण्डितश्री १९ केसरविमल-गणिचरणकमलयुगलचञ्चच्चञ्चरीकायमानमुनिनयविजयेन । आशुक्षणर्षिसितभानुमिते वर्षे बहुलमासे शुक्लेतरैकादशी कर्म्मवाट्यां श्रीलालपुरे सूत्रवृत्तियुक्तं ग्रन्थातरं १२७० किञ्चित्समधिकानि ॥

[ 5208 ]

**आदिः**– तपोभिर्दुस्तरैर्येन संतप्यात्मानमूर्जिताः ।
जिता रागादयस्तस्मै कस्मैचित् प्रणिदध्महे ॥ १ ॥
सूक्तयो रामचन्द्रस्य पूर्णेन्दुकलगीतयः ।
स्वातन्त्र्यमिष्टयोगं च पञ्चैता हर्षवृष्टयः ॥ १ ॥

**अन्तः**— समाप्तमिदं **निर्भयभीमनामनाटकं** व्यायोगः । **कृतिरियं महाकवेः** श्री**हेमचन्द्राचार्य**-शिष्यरत्नस्य श्री**रामचन्द्रस्य** संवत् १४७९ **वर्षे** आषाढे **बहुले**-कादश्यां सोमवारे मृगशिरोनक्षत्रे श्री**मल्लिकवाहनस्थाने** श्री**मुबारखशाहिविजयराज्ये दीक्षितान्वयेन हरिचन्द्रतनुजेन जनार्दनव्यासेन निर्भयभीमनाटकं** लिखितम् ।

[ 5213 ]

**आदिः**— धा(ध्या)त्वा सरस्वतीं देवीं विबुधानन्ददायिनीम् ।
सुवर्णां पुण्यरूपां तामलङ्कारविराजिताम् ॥१॥
पादाब्जाङ्गुलिसत्कनिर्मलनखादर्शेषु लोकत्रयी
निश्शेषा प्रतिबिम्बितान्तरमुदा यस्या नमन्ती प्रभोः ।
अप्राप्ता परभागसंसृतिभयाल्लीनेव दीना सती
तं पार्श्वं **फलवर्द्धिकेश्वर**महं नत्वोपसर्गापहम् ॥२॥
प्रौढं प्रौढयुगप्रधानपदसाम्राज्यं प्रतीतं पुरा
देवोक्त्या भुवि **नागदेवभविकश्राद्धस्य** साक्षात्पुरः ।
योगिन्योऽपि च येन मन्त्रमहिमाप्रागल्भ्यतो जिग्यिरे
स्तुत्वा श्री**जिनदत्तसूरि**मनघं तीव्रप्रतापारुणम् ॥३॥
**जिनकुशलं** कृतकुशलं प्रारब्धविशेषशास्त्रसिद्धिकरम् ।
प्रणिधाय मनसि मानसमिव शुचिहृदयं महामानम् ॥४॥
श्री**चण्डपालो**ऽत्र कियत्पदानां यद्यप्यनिन्द्यां विवृतिं चकार ।
तथापि तच्छेषपदार्थसार्थप्रकाशनात्तां विवृणोमि चम्पूम् ॥५॥

**अन्तः**— इति श्रीवाचनाचार्यश्री**प्रमोदमाणिक्यगणि**—शिष्यश्री**जयसोमगणि**-तच्छिष्यश्री**गुणविनयगणि**विरचितायां श्री**त्रिविक्रमभट्ट**विरचितश्री**दमयन्तीकथाविवृतौ** सप्तम उच्छ्वासः समाप्तः ॥७॥

श्रीमत्**खरतरगच्छे** स्वच्छेऽभूवन् नवाङ्गवृत्तिकराः ।
श्रीमद**भयदेवाख्याः** पुरा वराचार्यगुणमुख्याः ॥१॥
तेषां क्रमेण पट्टे विख्याता लक्षसंख्यगुणदक्षाः ।
रेजुर्जलधिगभीराः श्री**जिनमाणिक्यसूरिवराः** ॥२॥
तत्पट्टे विशदप्रभाकरकरस्फूर्जत्प्रतापोद्धुराः
वादप्राप्तजया धरापतिसदःपीठे सदा सुन्दराः ।
तत्तत्कृत्यविधानतो भुवि चमत्कारं विशांचक्रिरे
चेतस्सु प्रथमागमाधिगमतो लब्धप्रतिष्ठाश्च ये ॥३॥

युगप्रधानेषु महाप्रभावश्रियो निधानेषु विशुद्धबुद्धिषु ।
विराजमानेषु जनेषु तेषु स्तुत्येषु सच्छ्रीजिनचन्द्रसूरिषु ॥४॥
श्रीक्षेमशाखासु सुधातिशायिरसप्रवेशाः समवाग्विलासाः ।
श्रीक्षेमराजा भुवि पारिजातफलोपमाः पाठकलक्ष्मिलक्ष्याः ॥५॥
जयन्तु तेषां च वरा विनेयाः सद्भागधेयाः स्वगुणैरमेयाः ।
चत्वार आसन् विमलप्रबोधा विधेर्नु वेदा इव मूर्तिमन्तः ॥६॥
शिवसुन्दरनामानो विलसत्संवेगकनकतिलकाह्वाः ।
पाठकपदप्रधाना उभयेऽपि प्राप्तकीर्त्तिभराः ॥७॥
सदयोदयास्तृतीयाः सदयाः सततं दयातिलकगणयः ।
वाग्गुरवो वाग्गुरवस्तुर्याः शिष्याश्च विजयन्ते ॥८॥
श्रीमत्प्रमोदमाणिक्यनामधेयाः सुसाधुवृत्तधराः ।
भाग्याभ्यधिकास्तेषां विद्यन्तेऽमी पुनः शिष्याः ॥९॥
चत्वारोऽप्यम्बुधिवद् गभीराक्षोभ्यतादिगुणयुक्ताः ।
न च जडसंगतिभाजो भवन्ति येऽस्मिन् महीपीठे ॥१०॥
वाग्गुरुगुणरङ्गाख्या रङ्गद्गुरुभक्तिभागुदयारङ्गाः ।
श्रीजयसोमाः सोमाननास्तथा क्षेमसोमाह्वाः ॥११॥
तत्र श्रीजयसोमकल्पतरवोऽमेयप्रमाशेमुषी-

शाखालीढवरागमाम्बरतलाः सत्पात्रशोभावहाः ।

कीर्त्तिप्राप्तफलाः कलोत्तरकलाः सन्तीह मत्पाठकाः

श्रीमन्तो गुरवो रवोदितरसैः संप्रीणितप्राणिनः ॥१२॥

तेषां शिष्यो मुख्यो गुणविनयाख्यो विमृश्य शास्त्राणि ।
सत्पाणिनीय—हैमानेकार्थोणादिमुख्यानि ॥१३॥
श्रीचण्डपालरचितं दुर्गपदप्रकटनैकसितकक्षम् ।
श्रीचम्पूटिप्पनकं पुनः सहार्दं समुपजीव्य ॥१४॥
श्रीविक्रमवंशोद्भवसद्विक्रमराजसिंहनृपराज्ये ।
सत्कर्मकर्मचन्द्राभिधधीसखधुर्यसंधार्य्ये ॥१५॥
श्रीमद्विक्रमभूपतेः स्वरसरस्वत्तर्कशाकप्रमा-

ख्यातायां शरदि प्रमोदविसरभ्राजिष्णुपौराकुले ।

श्रीसेरुन्नकनाम्नि भद्रनगरेऽर्हच्चैत्यशोभाधरे

चक्रे श्रीदमयन्त्युदारचरिते टीकां महार्थां सुधीः ॥१६॥

सरस्वत्या प्रणीतायां श्रीचम्प्वां कृतसंविदि ।
यन्मया वितथं प्रोक्तं मतिमान्द्येन चान्यथा ॥१७॥

सद्व्याख्यां कुर्वता सन्तोऽनुग्रहं मयि धीधनाः ।
तत्कृत्वोत्सारयन्त्वार्या माऽवजानन्तु किञ्चन ॥१८॥ युग्मम् ।

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥१९॥

आधुनिकबुधविनिर्मितमेतद्व्याख्यानमिति विमृश्येह ।
माऽवज्ञां कुरुत बुधा ग्रन्थान् संवीक्ष्य यद्दृब्धम् ॥२०॥

श्रीफलवर्द्धिकपार्श्वेश्रीमज्जिनदत्त-कुशलसूरीणाम् ।
सौम्यदृशा पठतामिह शुभार्थदा वृत्तिरेषा स्तात् ॥२१॥

वैयाकरणविशिष्टैः शिष्टैः सदसद्विवेकमतिपुष्टैः ।
रत्ननिधानैर्वाचकमुख्यैर्दक्षैरशोधीयम् ॥२२॥

न येषु देशेषु विशिष्टधर्मवार्त्ताऽपि कर्णातिथितां बभाज ।
येन प्रजापालनतत्परेण प्रवर्त्तित तेषु न विशुद्धधर्मः ॥२३॥

अनार्या अपि देशाः सद्धर्मभावनयाऽनया ।
येनार्या विहिता यद्वत्तिलाः पुष्पैः सुवासिताः ॥२४॥

दोषापहारात्तमसो विनाशनात् प्रकाशनान्न्यायपथस्य भूतले ।
श्रीसूर्यसेवाकरणानुषङ्गिणा श्रीसाहिना येन कृतं महाद्भुतम् ॥२५॥

गवादिप्राणिसंघातघातस्य प्रतिषेधनात् ।
येन कान्ता दया कान्ता सौभाग्यैकमठीकृता ॥२६॥

स्वप्नेऽपि सज्जनाः सर्वे यस्येमामाशिषं ददुः ।
त्वं पालय चिरं राज्यं यत्कृपावारिवारिधिः ॥२७॥

यस्य राज्ञः प्रसत्त्याऽमी धर्मं कुर्वन्ति साधवः ।
तस्माद् यद्विजयो नित्यं यतो धर्मस्ततो जयः ॥२८॥

यस्य नाम्नि विराजन्ते विष्णु-ब्रह्म-महेश्वराः ।
तेनात्राकबरेत्याख्या ख्याता सर्वत्र भूतले ॥२९॥

विबुधश्रेणिविराजितसविधे वरनन्दनश्रियामुदिते ।
कृतगोरक्षे दक्षे शुभनयन इव त्रिदिवनाथे ॥३०॥

अकबरनृपाधिनृपतौ विजयिनि शर-भुवनसम्मिते वर्षे (१६५७) ।
श्रीमल्लाभपुरीयं प्राकाशि परा पुरः सुधियाम् ॥३१॥
॥ इति श्री[दमयन्ती]चम्पूवृत्तिः समाप्ता ॥

तत्समाप्तौ सम्पूर्णा सारस्वतीति नाम्नी वृत्तिरियम्॥ लिखिता च संवत् १७३४ वर्षे फाल्गुनादितृतीयायां बुधे सा च वाच्यमाना चिरं नन्दतात् श्रीयोधपुरे॥

[5214]

**अन्तः**– इति विविधवितर्कविशविध्वस्तनिद्रः सजलजडिममीलत्पक्ष्मचक्षुर्दधानः ।
हरचरणसरोजद्वन्द्वमाधाय चित्ते नृपतिरुभयसंगी सत्क्रिया मामनैषीत् ॥४९॥

इति श्रीचम्पूकथासूत्रं समाप्तम् । लिखितं तपाश्रीगच्छशृङ्गार–चतुर्दशमहाविद्या-भृङ्गार– जगदद्भुतविभवभूमीधवसभाविदितविद्यामदोन्मादिकुवादिवृन्दवृन्दारककमनीय-वादसक्र(शक्रा)गार-कलिकालगौतमावतार-भट्टारकप्रभुपुरन्दर-श्रीश्रीश्रीसुधानन्दसूरीश्वरच-रणकमलरोलम्बलीलामालम्बमान–सकलपण्डितप्रकाण्डमण्डलीलब्धमानसर्वविबुधशिरोरत्न-प्रत्न पं० सुमतिरत्नगणि-शिष्यभुजिष्यपं०इन्द्ररत्नगणिपादपद्मोपजीविना क्षेमदेवगणिना ।

संवत् १५३४ वर्षे मार्गशीर्षमासे वदि ११ दिने रविवारे सकलनगरप्रवरे श्रीमति राजपुरनगरे भद्रं भवतु श्रीश्रमणसंघस्य । नाक्षराणि पठता किमपाठि ।

[5368]

**अन्तः**– विशालराजसूरीशसुधाभूषणसद्गुरोः ।
शिष्येण जिनसूरेण सकथा याऽकृथा यथा ॥१३॥
इति नियमपालने श्रीमन्मथपुत्रराजरूपसेनकथा ।

संवत् १७[०]४ वर्षे आषाढमासे शुक्लपक्षे नवम्यां तिथौ गुरुवारे आमृणि-नगरे मुनिराजमाणिक्यः(क्येन) लिखितम् ॥

[5418]

**अन्तः**–श्रीमेरुतुङ्गसुगुरुप्रणिधानतः श्रीमाणिक्यसुन्दर इमां शुकराजसत्काम् ।
नव्यां कथां रचयति स्म सुविस्मयां श्रीशत्रुञ्जयाख्यगिरिगौरवगौरवर्णाम् ॥१॥
इति श्रीशुकराजकथा समाप्ता । ग्रन्थसङ्ख्या पञ्चशतषष्टिः ।

संवत् १७५७ वर्षे कार्त्तिकशुदि १० रविवासरे सकलवाचकचक्रचूडामणि-महोपाध्यायश्री ५ तेजचन्द्रगणि-शिष्य पं०ताराचन्द्र-पं०तत्त्वचन्द्रगणि-तत्शिष्यमुनि-केसरचन्द्रलिखितं धीणोजग्रामे ।

[5423]

**अन्तः**– सप्ततिकथानकं समाप्तम् । शुकसप्ततेरुद्धारः समाप्तः । ग्रन्थसङ्ख्या १४०० चतुर्दशशतानि ।

स्वस्ति संवत् १५०७ वर्षे ज्येष्ठशुदि ९ नवम्यां तिथौ सोमदिनेऽद्येह घनौघ-नगरस्थितो श्रीरायकालज्ञातीयपण्डित अंगासुतरोहोगदत्तेन शुकसप्ततिकथा परोपकाराय लिखिता एवं कथा ७० लिखिताः ।

[5462]

अन्तः— शृण्वन्ति ये कथामेनां विचक्षणजनप्रियाम् ।
भवन्ति सुखिनो नित्यमत्यन्तानन्दपूरिताः ॥१०॥

पुराऽभवच्छ्रीमलधारिगच्छे विद्याब्धिसूरिर्विदितः पृथिव्याम् ।
कीर्त्तिर्यदीया धवलीकरोति भूमण्डलं क्षिप्रविचित्रमेतत् ॥११॥

पट्टे तदीये गुणसुन्दराख्यः सूरीश्वरो मन्मथमानहर्त्ता ।
दुर्वादिवृन्दप्रबलान्धकारोष्णांशुर्विभातीन्दुरिव स्वचेताः ॥१२॥

तत्पट्टभूषणमनङ्गजयप्रवीणः श्रीसर्वसुन्दरगुरुर्विदितो विभाति ।
सच्छास्त्रविन्निखिलभव्यजनाब्जराजीसंजीवनौषधमशेषगुणैकगेहम् ॥१३॥

तेनेयं रचिता कथा गगन-भू-बाणेन्दुसंवत्सरे (१५१०)
माघे मासि नवेन्दुगोशुचितरेऽभीष्टे जनानां भृशम् ।
पञ्चम्यां भृगुवासरे बहुविधादुद्धृत्य शास्त्रान्तराद्
दुर्गे मण्डपनाम्नि पण्डितमुखे भूयात् सदा शाश्वती ॥१४॥

इति मलधारिश्रीसर्वसुन्दरसूरिविरचितायां हंसराज-वछ(त्स)राजकथायां राज्यादि-वर्णणो नाम पञ्चमो विश्रामः । एवं ग्रन्थाग्रन्थश्लोकसङ्ख्या ११३१, अक्षर ८ ।

संवत् १७१६ वर्षे अश्विनशुदि तृतीया भृगुवासरे लिखितं बालालीऋषि[णा] तलवंडीग्राममध्ये ।

[5467]

आदिः— समकार्ये हि सर्वस्य सर्वे सन्ति सहायकाः ।
विषमे न पुनः कश्चिद् धनदश्रेष्ठिनो यथा ॥१॥

अन्तः— मूर्खशिष्यः स्वकार्याय गुरुणा स्वहितैषिणा ।
प्रेष्यो नैवात्र भेदाख्यौ जटिनो हि निदर्शनम् ॥३४॥

इति श्रीभरटकद्वात्रिंशिका समाप्ता ।

[5468]

आदिः— यन्नेयामपि कामिनीं परिणयत्यभ्यर्थ्यमानोऽप्यलं
तन्नूनं गृहभारकातरतया भग्नोद्यमो देवरः ।

मा-शङ्करस्तु हरिस्त्रिखण्डविजयी भ्राताऽस्ति ते सर्वदा(?)
भामाद्याभिरितीरितः स्मितमुखो नेमिर्वशी पातु वः ॥१॥

**अन्तः**— परिषदि रसप्रियायां रसावतारार्थमन्तरकथौघम् ।
**मलधारिगच्छनाथः सूरिश्रीराजशेखरः** कृतवान् ॥१॥
द्विः पूर्वार्द्धे गीतिः षष्टिर्मात्रा व्याख्या मुनीन्द्राणाम् ।
चातुर्विद्यावतारासु पूजासु वर्णपुष्पस्रज इव फलिनी भवन्त्वेताः (?) ॥२॥

सुगमं नवरं केवलं एता इति अन्तरकथाः प्रक्रमायातत्वात् । अन्तरकथा-सङ्ग्रहोऽयं नाम ग्रन्थः । **औदीच्यज्ञातीय** आचार्य**काला**सुत**श्रीव**त्सलिखितम् ॥

[ 5470 ]

**आदिः**— नमिऊण जिणं वीरं सुरमहियं केवलिं पवरवाणिं ।
**अक्खाणयमणिकोसं** भव्वजणविबोहयं वोच्छं ॥१॥

**अन्तः**— **अक्खाणयमणिकोसं** एयं जो पढइ कुणइ जहजोगं ।
देविंदसाहुमहियं अइरु सो लहइ अपवग्गं ॥

कृतिरियं सैद्धान्तिकशिरोमणिश्री**ने**मिचन्द्रसूरेरिति **आख्यानकमणिकोशवृत्तिः** समाप्ता ।

**वृ० अन्तः**—वृत्तिं विधाय यदिमां महतीं मयाऽऽप्तं पुण्यं पवित्रितजगत्त्रयचित्तवृत्ति ।
तेनाशु भव्यनिवहो लभतां भवाब्धौ सद्यानपात्रमिव बन्धुरबोधिबीजम् ॥१॥

**प्रशस्तिः** - ज्ञानादिरत्नवसतिर्जनमान्यलक्ष्मीजन्माग्रभूमिरभितो बहुसत्त्वसेव्यः ।
निर्धौतकर्ममलनिर्मलधर्मनीरः क्षोणीभृदाश्रितगरिष्ठगभीरमध्यः ॥१॥
अच्युतप्रवणावासो मर्यादाऽनतिवर्त्तकः ।
अस्ति स्वच्छो **बृहद्गच्छः** श्रीमान् नाथ इवाम्भसाम् ॥२॥
इति नीरधितुल्यगुणे दयासुधापास्तजन्मरुग्मरणे ।
क्वचिदतिशायिनि समये शिष्टाः! निशमयत यज्जातम् ॥३॥
मुनिविबुधधृतजिनमतमन्दरमथिमथ्यमानतन्मध्यात् ।
स्फूर्जन्महाप्रभावः प्रादुरभूद् रम्यरत्नचयः ॥४॥

तथाहि— श्री**देव**सूरिः सुमनःसमृद्धः समुल्लसत्सत्फलपत्रशाखः ।
कुतोऽप्यथो आविरभूदमुष्मात् सुरावगीतोपचिपारिजातः ॥५॥

अनेकविकृतिक्रियाकुटिलकर्मरूपामयाऽपहारकरणक्षमः श्रुतिविचारदक्षः शुचिः ।
प्रवृद्धकरुणामृतस्समुदपादि धन्वन्तरिः श्रियां पदमनागसा**म**जितसूरिरर्यः सताम् ॥६॥
रुचिरचरणयोगाद् दुर्धरैरावतोऽभूदनुपममदवारिप्रोल्लसत्कीर्त्तिघण्टः ।
प्रकटितसकलाङ्गो मोहसैन्याप्रधृष्यो विबुधपतिनिषेव्यः श्रीम**दा**नन्दसूरिः ॥७॥

समुन्नत्याधारः स्वरगतलसल्लक्षणधरः
श्रुतिश्रेयानंशिर्दधदपरचिह्नानि नितराम् ।
विनिर्यत्सङ्केतौ सुविषममहावादिसमरे
स्फुरत्तेजोदृप्यत्तरलनयनोऽश्वश्च निरगात् ॥८॥
श्रीनेमिचन्द्रसूरिर्यः कर्ता प्रस्तुतप्रकरणस्य ।
सर्वज्ञागमपरमार्थवेदिनामग्रणीः कृतिनाम् ॥९॥
अन्यां च सुखावगमां यः कृतवानुत्तराध्ययनवृत्तिम् ।
लघुवीरचरितमथ रत्नचूडचरितं च चतुरमतिः ॥१०॥
शश्वत्पण्डितमण्डलीकुमुदिनीकान्ताप्रमोदावहः
सर्वज्ञागमदेशनामृतकरैर्निर्वापयन् मेदिनीम् ।
भास्वत्सन्मुनितारकेषु नियतं सन्नायकत्वं दधत्
स श्रीमानुदियाय यो निजकुलव्योमाङ्गणालङ्कृतिः ॥११॥
सूरिः श्रीजिनचन्द्रश्चन्द्रो निःशेषजनमनोदयितः ।
सौम्यत्व-कलावित्त्वप्रभृतिगुणानां स्वकुलभवनम् । ॥१२॥
तच्छिष्यः प्रथमपदे श्रीपदवानाम्रदेवसूरिरभूत् ।
अपरोऽपि तत्कनिष्ठः श्रीमान् श्रीचन्द्रसूरिरभूत् ॥१३॥
इतश्च— यो मेदपाटाध्युषितोऽपि धीमान् दयाधनो धार्मिकमध्यवर्ती ।
तत्साधुताधर्मकृताभिलाषः सुश्रावकत्वं परिपाति सम्यक् ॥१४॥
मारावल्या अल्लकश्रेष्ठिवर्यो मुक्त्वा स्वीयं धाम हेतोः कुतश्चित् ।
आयातोऽसावर्बुदाधःप्रदेशे तत्राप्यासीत् स्वैर्गुणैः सुप्रसिद्धः ॥१५॥
किं च— कासहृदधाम्नि निजं धर्म्यं धाम प्रवर्त्तितं येन ।
पोषधशाला सच्छ्रावकादिधर्मार्थिमत्यर्थम् ॥१६॥
आजन्मापि जिनेश्वरस्य सदने बिम्बे जिनाभ्यर्चने
तीर्थानामभिवन्दने जिनमतव्यालेखनेऽलङ्कृतौ ।
श्रीमत्सूरि-महत्तरापद-जिनप्रव्राजनादौ शुभे
धर्मार्थं व्ययतो धनं सफलतां यस्याऽगमद् धीमतः ॥१७॥
स सिद्धनागः(गश्च) सुलब्धजन्मा सदाकृतिर्धर्मविशुद्धकर्मा ।
पुत्रोऽभवत् तस्य जनप्रसिद्धः पुण्यानुभावाच्च सदा समृद्धः ॥१८॥
तस्मादपि दौस्थित्यात् कुतोऽपि धवलक्कके समायातः ।
आस्ते स सिद्धनामा तत्रापि जने गुणैः प्रथितः ॥१९॥

अन्यच्च येन कारितमतिरम्यं भव्यजनमनोहारि ।
सीमन्धरजिनबिम्बं रमणीये मोढचैत्यगृहे ॥२०॥
त्यागी भोगी देवगुर्वादिभक्तो जैने धर्मे प्रेमरागानुरक्तः ।
वार्धक्येऽभूदेक उद्योतनाह्वः पुत्रस्तस्य त्यक्तदुष्टद्विजिह्वः ॥२१॥
श्रीनेमिचन्द्रसूरेर्वाक्यात् तदनु स्वशिष्यभणनाच्च ।
उद्योतनसच्छ्रावकशि(?वि)शेषसद्भक्तिवचनाच्च ॥२२॥
तत्रैव बृहद्गच्छे रत्नाकरसन्निभे प्रसूतेन ।
प्राकृतमणिकल्पेन श्रुतगुरुबहुमानसहितेन ॥२३॥
श्रीपदसंगतनाम्ना श्रीमज्जिनचन्द्रसूरिशिष्येण ।
रचिताऽऽम्रदेवमुनिपेन वृत्तिरेषा स्वबोधेन ॥२४॥
व्याख्याप्रज्ञप्ताविव लब्धवरायामिहापि सद्वृत्तौ ।
श्रुतिसुखदवर्णरुचिरा विचित्रगम-भङ्गरमणीया ॥२५॥
सुव्यक्तमेकचत्वारिंशदनूना(४१) भवेयुरधिकाराः ।
तत्र सतानी च विचारश्रुता अग्र्यवृत्ताश्च (?) ॥२६॥
सत्स्वपि नानारूपेषु पूर्वकविभिर्विशिष्टमतिविभवैः ।
रचितेषु शास्त्रविवरणकथाप्रबन्धेषु सरसेषु ॥२७॥
कीदृगिदं मत्काव्यं तदपि ग्राह्यं कृतप्रचुरकरुणैः ।
मयि वल्लभमाध्यस्थ्ये माध्यस्थ्यगुणान्वितैः सद्भिः ॥२८॥
छन्दो-लक्षणविकलं समयोत्तीर्णं च यत् किमपि लिखितम् ।
तच्छोध्यं विद्वद्भिः कृताञ्जलिः प्रार्थये भवतः ॥२९॥
अन्यच्च नेमिचन्द्रा गुणाकराः पार्श्वदेवनामानः ।
एते त्रयोऽपि गणयो विपश्चितो मुख्यनिजशिष्याः ॥३०॥
साहाय्यं कृतवन्तो मम लेखन-शोधनादिकृत्येषु ।
आधानोद्धरणे च प्रमादविकलाः कलाकुशलाः ॥३१॥
नवत्या युक्तेषु प्रथितयशसो विक्रमनृपा-
च्छतेषु क्रान्तेषु त्रिनयनसमानेषु शरदाम् ।
अजय्ये सौराज्ये जयति जयसिंहस्य नृपते-
रियं स्थानीयेऽगाद् धवलकपुरे सिद्धिपदवीम् ॥३२॥
श्रेष्ठियशोनागस्याऽऽरब्धा वसतावबस्थितैः सद्भिः ।
वसतां सम्यगवसिता वसतावच्छुप्तसत्कायाम् ॥३३॥

भुवनानीव चतुर्दश धातुर्मम रम्यवर्णपदभाञ्जि ।
अक्षरगणनाद् ग्रन्थो जातोऽनुष्टुप्सहस्राणि ॥३४॥
मानसगर्भे स्थित्वा लक्षणयुगयं सपादनवमासैः ।
आख्यानकमणिकोशः सुत इव समपाचि सद्वृत्तिः ॥३५॥
यावच्चन्द्रश्च सूर्यश्च यावन्मेरुर्महीतलम् ।
स्वर्गापवर्गवत तावन्नन्द्यादेषाऽपि मत्कृतिः ॥३६॥

ग्रन्थाग्रम् १४००० । इति श्रीमदाम्रदेवसूरिविरचितवृत्तावाख्यानकमणिकोश-वृत्तिप्रशस्तिः समाप्तेति ।

शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं सर्वत्र सुखी भवतु लोकः ॥१॥

स्वस्ति श्रीनृपविक्रमार्कसंवति २००२ वर्षे पौषशुक्लप्रतिपत्तिथौ शुक्रवासरे अणहिलपुरपत्तनान्तर्गत-कसुंबीयावाडानिवासश्रेष्ठिवर्यगोपालचन्द्रात्मज– श्रेष्ठिलल्लुचन्द्र–सुपुत्र्या स्वपितृगृहनिवासिन्या भगवतीबहेननाम्न्या स्वजननीरुक्मिणीबाई तथा स्वभ्रातृयुगल-भाईश्रीजीवणलाल–तत्पत्नीचन्द्रावतीबहेन–भाईश्रीरोहितलाल-तत्पत्नी–वसुमती । तथा निजात्मजहीरालालप्रमुखस्ववृद्धकुटुम्बपरिवृतया अष्टाहिकातपः–षोडशोपवासप्रभृतितपःसमाप्तौ स्वज्ञानावरणीयकर्मनिर्जरणार्थं विद्वन्मुनिजनाध्ययनवाचनाद्यर्थं च । आचार्यश्रीआम्रदेवसूरिसंकलितटीकासंवलितः आचार्यश्रीनेमिचन्द्रसूरि-विनिर्मित आख्यानकमणिकोशाख्योऽयं महाग्रन्थोऽलेखि । उपदीकृतश्चायं धर्मवात्सल्यं धर्ममातुष्वसृभावं च विभूत्याऽनया स्वधर्मभागिनेयभावं बिभ्रते । संविग्नशाखीयाऽऽद्याचार्य–पाञ्चालदेशोद्धारक–तपोगच्छाधिराज–श्रीमद्विजयानन्दसूरिपुरन्दरान्तेवासि– पत्तनादिजैनज्ञानभाण्डागारोद्धारक–प्रवर्त्तकश्रीकान्तिविजयविनेयाणुः जिनप्रवचनलेखन-संशोधनप्रवीण-पत्तन-लींबडी-वटपद्रादिनगरस्थितमहाज्ञानकोशोद्धारक– व्यवस्थापक–आत्मानन्दजैनग्रन्थमालासंपादक–मुनिचतुरविजयलघुशिष्याय मुनिपुण्यविजयाय । लिपीकृतश्चायं ग्रन्थाऽणहिल्लपुरपत्तनस्थ-वागोलपाटकनिवासिना लेखकवरेण भोजकज्ञातीयेन ठाकोरपुनमचन्द्रात्मजेन चीमनलालेनेति । वर्धतां श्रीश्रमणवीरवर्धमानस्य प्रवचनम् । जयतु श्रीसंघभट्टारकः भद्रं भवतु एतद्ग्रन्थलिखन–लेखनवाचनाध्यापनश्रवणश्रावण-तत्पराणां महानुभावानां भव्यसत्त्वानाम् ।

सूर्याचन्द्रमसौ यावद् भ्रमतो जगतीतले ।
विद्वद्भिर्वाच्यमानोऽसौ तावन्नन्दतु पुस्तकः ॥

[ 5479 ]

**अन्तः**— वरं दत्वा देवाङ्गनाः स्वर्गं जग्मुः श्रीभोजराजस्तु ।
जलधिमेखलायामखण्डशासनश्चिरं रराज राजलक्ष्म्या ॥
इति सिंहासनद्वात्रिंशिका समाप्ता ॥
श्रीविक्रमादित्यनरेश्वरस्य चरित्रमेतत् कविभिर्निबद्धम् ।
पुरं महाराष्ट्रवरिष्ठभाषामयं महाश्चर्यकरं नराणाम् ॥१॥
क्षेमङ्करेण मुनिना वरगद्यपद्यबन्धेन युक्तिकृतसंस्कृतबन्धुरेण ।
विश्वोपकारविलसद्गुणवर्णनाय चक्रे चिरादमरपण्डितहर्षहेतोः ॥२॥

संवत् १४८४ वर्षे कार्त्तिकसुदि ६ षष्ठ्यां गुरौ पिप्पलाचार्यपूज्यश्रीजय-तिलकसूरिपदे श्रीसागरचन्द्रसूरिणा स्वपरिवारहेतोः कथा लिखिता ।

[ 5486 ]

**अन्तः**— श्रीविक्रमादित्य[कथा] १३७५ ।

संवत् १४८९ वर्षे आश्विनवदिपञ्चमीदिने शुक्रवारे वीसलनगरवास्तव्य श्रे०-गोवल-सुतश्रे०जोगाकेन सुश्रावकपुङ्गवेन नानागुणगरिष्टे(ष्ठे)न श्रीज्ञानभक्त्या पं०-उदयसारगणिवाचनायालेखि । ( अन्यदीयहस्तेनोल्लिखितमिदम् — )

पं०रङ्गनिधानपठनार्थं तत्शिष(ष्य)भावहर्षपठनार्थम् ।

[5489]

**अन्तः**— संवत् १५२७ वर्षे मार्गसिर सुदि ११ बुधवासरे लिखिता स्वयम् ।
आलावणे सहस्सं आलावंतस्स देइ दससहस्सं ।
हसियो विदेहलक्खं परियोसो विक्कमो कोडी ॥१॥
मनि गरव्वउ न कीजइ भला भलेरा अत्थि ।
विकमु त्रूटइ रषियउ थलेविणु तिलपत्थि ॥२॥
इति श्रीविक्रमादित्यचरित्रं समाप्तम् ।

[ 5491 ]

**आदिः**— पालित्तएण रइया वित्थरउ तह य देसिवयणेहि ।
नामेण तरंगवई कहा बिवित्ता य विउला य ॥

**अन्तः**— हाईयपुरीयगच्छे सूरी जो वीरभद्द नामेत्ति ।
तस्स सीसस्स लिहिया जसेण गणिनेमिचंदस्स ॥ ग्रन्थाग्रम्४००॥

[ 5492 ]

**अन्तः**— इय पवरसईए नम्मयासुन्दरीए चरियमइपसत्थं कारयं निव्वुईए ।
हरिजयणसुद्धिडीमज्झयाराउ किंची लिहियमणुगुणाणं देउ सुक्खं जणाणं ॥४६॥
इति नर्मदासुन्दरीमहासतीकथानकं समाप्तमिति ॥

[5493]

आदिः— भीमभवभमणसंभंतभव्वसत्ताण ताण दुल्ललिओ ।
सरयसमुग्गयससहरजसधवलियतिहुयणाभोगो ॥१॥
नमिरामरमौलिकिरीडकोडिसंघट्टलट्ठपयकमलो ।
परमप्पा पढमजिणो परमपयपइट्ठिओ जयइ ॥२॥
अज्ज वि जस्स विरायइ सुपसिद्धं पवयणं गुणसमिद्धं ।
संसारजलहिपडियाण जाणवत्तं व भवियाण ॥३॥
सो संगमयमहासुरमुसुमूरियगरुयदप्पमाहप्पो ।
वीरो मयणमहाभडमयमहणो दलउ दुरियाइं ॥४॥
अजियाइणो जिणिंदे जयपयडे पासनाहपज्जंते ।
सयलसुरासुरनमिए नमामि परमाए भत्तीए ॥५॥
निट्ठवियअट्ठकम्मे जाइजरामरणबंधणविमुक्के ।
तेलोक्कमत्थयत्थे पणमह सिद्धे सुहसमिद्धे ॥६॥
सुयरयणसायराणं खीरासवपमुहलद्धिजुत्ताणं ।
पंचविहायारधराण पणमिमो गोयमाईणं ॥७॥
उज्झियसंसारपहे सुत्तपयाणेण तोसियविणेए ।
आयरियठाणजोग्गे वंदे हं पवरउज्झाए ॥८॥
विविहतवसोसियंगे निस्संगे निम्ममे निरारंभे ।
सिद्धिसुहसाहणरए साहू सिरसा नमंसामि ॥९॥
जे महमहग्घनाणाइरयणतियगस्स कारणं गुरवो ।
ताण तिसंझं पि सया पाए पयओ पणिवयामि ॥१०॥
देवासुरनरकिण्णरपरितुट्ठकिट्ठिसद्दसंवलिया ।
सव्वसभासाणुगया जिणवाणी वो सुहं दिसउ ॥११॥
करधरियधवलकमला सारयससिसंखकुंदसमवण्णा ।
सियवसणभूसणधरा सरस्सई जयइ जयपयडा ॥१२॥
नंदंतु महाकइणो सुललियपयवण्णनाससोहिल्ला ।
जाण पबंधा पवरा हरंति हिययं छइल्लाण ॥१३॥
सरिमो सुयणाण सया गुणगहणपराण दोसविमुहाण ।
जाण मुहमहोयहिणो वयणं अमयं व पज्झरइ ॥१४॥

छंदालंकारविवज्जियं पि जइविरहियं पि विरसं पि ।
जे नियमइमइविहवेण कुणंति कव्वं गुणग्घवियं ॥१५॥

अन्तः— सिरिवद्धमाणसूरीहिं विरइयाए मणोरमकहाए ।
मोक्खफलविरइलाहावसरो तुरिओ परिसमत्तो ॥१॥
संपइ कहा समप्पइ सुबोहसद्देहिं विरइया एसा ।
थंभणयकयनिवासो पासो महमंगलं कुणउ ॥२॥
छंदाणुवित्तिरहिया निरलंकारा सुवण्णयविमुक्का ।
दुग्गयगामीणसुय व्व मह कहा लक्खणविहुणा ॥३॥
तह वि सुयणेहिं गहिया सरलसहावेहिं दोसविमुहेहिं ।
एसा वि विराइस्सइ दुग्गयदुहियठाणगया ॥४॥
आसि जयपायडजसो सीसो [सिरि]वद्धमाणसामिस्स ।
पंचमगणहरदेवो चोद्दसपुव्वी सुहम्मो त्ति ॥५॥
तस्स य सीसो जंबू तओ वि पभवो पहाणगुणपभवो ।
मणगपिया परमरिसी तत्तो सेज्जंभवो भयवं ॥६॥
एवं सूरीण परंपराए ता जाव अज्जवइरो त्ति ।
साहाए तस्स विमले चंदकुले चंदसमलेसो ॥७॥
अप्पडिबद्धविहारो सूरी सोमो व्व जणमणाणंदो ।
आसि सिरिवद्धमाणो पवड्ढमाणो गुणगणेहिं ॥८॥
सूरिजिणेसर सिरिबुद्धिसागरा सागरो व्व गंभीरा ।
सुरगुरु-सुक्कसरिच्छा सहोयरा तस्स दो सीसा ॥९॥
वायरण-छंद-निग्घंट-तक्क-नाडय-कहाइया बहवे ।
विबुहजणजणियहरिसा जाण पबंधा पढिज्जंति ॥१०॥
ताण विणेओ सिरिअभयदेवसूरि त्ति नाम संजाओ ।
विजयक्खो पच्चक्खो कयविग्गहसंगहो धम्मो ॥११॥
जस्स गुणा गयमच्छरजणेण परिओसमावहंतेण ।
महुमासपल्लवा इव भण केण न धारिया कण्णे ॥१२॥
तेलोक्कजगडणुद्धरकंधरमयरद्धओ मलेऊण ।
तह मुक्को जेण पुणो सुमिणे वि न चेव संढुक्को ॥१३॥
आणंदियविबुहजणा पुण्णपया सुगइसाहणसमत्था ।
वयणगयणाउ गंग व्व भारई जस्स निक्खन्ता ॥१४॥

ठाणाइनवंगाणं महत्थसुत्ताण गणहरकयाणं ।
विवरणकरणेण कओ उवयारो जेण संघस्स ॥१५॥
सेयंबरसोहकरस्स विमलजसकिरणधवलियधरस्स ।
भवियजणकमलबोहणससिणो सियवायकलियस्स ॥१६॥
सीसेहिं तस्स एसा कहा कया वद्धमाणसूरीहिं ।
होउ पढंत सुणंता कारणं मोक्खसोक्खस्स ॥१७॥
गुणगरुओ गुरुभाया वयजेट्ठा आगमम्मि पत्तट्ठो ।
विमलगणी विमलजसो खमालओ अत्थि पसिद्धो ॥१८॥
लिहण-लिहावण-सोहणपमुहपओयणपसाहणेणेत्थ ।
तेण कयं साहिज्जं सव्वत्थ समुज्जमंतेण ॥१९॥
धंधुकयम्मि नयरे महलसुओ वसइ वेल्लओ नाम ।
सड्ढो पवरगुणड्ढो सुवियड्ढो धम्ममग्गम्मि ॥२०॥
मोढकुलंबरससिणो कवड्डिसेट्ठिस्स पुरपहाणस्स ।
सा दुहिया मयरहिया वेली नामि त्ति इह कहिया ॥२१॥
देवगुरुपायभत्ता दढसम्मत्ता तवम्मि उज्जुत्ता ।
जस्स घरे वरघरिणी पच्चक्खा धम्ममुत्ति व्व ॥२२॥
तस्स वसहीटिएहिं कया कहा साहसंककालाओ ।
एक्कारसहिं सएहिं गएहिं वासाण चालेहि ॥२३॥
आसोयकसिणपक्खे सोमदिणे तह धणिट्ठनक्खत्ते ।
उदयंते दिवसयरे समाणिया पडिवयविहीए ॥२४॥
पुव्वावरेण संपिंडियाए पाययकहाए एयाए ।
पण्णारस उ सहस्सा गंथपमाणं विणिद्दिट्ठं ॥२५॥
संसारसरसरोरुहसरिसाणं भवियसमरभइयाण(?) ।
सिरिअभयसूरिपायाण पणमिमो पायडजसाण ॥२६॥
कमलदलदीहनयणा कमलमुही गहियवामकरपोत्था ।
कइयणमुहकयवासा सरस्सई जयइ सुपयासा ॥२७॥
जमिहासमंजसं कह वि किं पि मइमोहओ मए भणियं ।
पुत्तवराहमिव पिया खमंतु तं सुयहरा मज्झ ॥२८॥

इति मणोरमाकहा ॥

[ 5494 ]

**अन्तः**– इति श्री**मही**पालकथा समाप्ता ॥

संवत् १४९२ वर्षे आषाढ सुदि १४ चतुर्दश्यां बुधे भट्टारकश्री**जय**प्रभसूरिः । लेखकआह्लाकेन **मही**पालचरित्रं लिखितमिति भद्रं भूयात् ॥

[ 5495 ]

**अन्तः**– **मु**णिवइचरियं पाइयं गाहहि समासउ उद्धरियं ।
पुव्वचरीयाइ सुगमरम्मं हरिभद्दसूरीहिं ॥३॥
इति श्री**मु**निपतिचरित्रं समाप्तम् ॥

तेषां पङ्केरुह्‌ऋषि**स्वा**मिजी तस्य शिष्य**स**दानंदऋषिजी; तस्य शिष्यलिखितं **सु**जाणऋषि आत्माअर्थे ।

संवत् १७०९ वर्षे श्रावण शुदि १२ वारु शुक्रवारु साहजहाराजे वर्त्तते लिखितं **स्था**नेश्वरकोटात् ।

[ 5512 ]

**अन्तः**– इति श्री**ख**रतरगणनभोऽङ्गणदिनमणिश्री**जिन**वर्द्धनसूरि-शिष्यश्री**जिन**सागरसूरिविरचिता श्री**क**र्पूरप्रकरटीका ।

श्री**ख**रतरगणराजश्री**जिन**वर्द्धनसूरिशिष्येण ।
श्री**जिन**सागरगुरुणा रचिता **क**र्पूरटीकेयम् ॥१॥
प्रथमादर्शे लिखिता तच्छिष्येणेह **धर्म्मचन्द्रे**ण ।
उत्सूत्रं यल्लिखितं तत् शोध्यं सज्जनैरत्र ॥२॥
यदवापि मया पुण्यं टीकाकारेण म[न्]दमतिनापि ।
तेन सकलेऽपि लोके प्रतिपत्तिर्जैनधर्मेऽस्तु ॥४॥
इति श्री**क**र्पूरप्रकरमहाकाव्यटीका संपूर्णा ।

[ 5516 ]

**मू०अन्तः**–**ख**रतरगच्छे स्वच्छे श्री**जिन**भद्रस्य सूरिराजस्य ।
पट्टे विजयिनि सततं श्री**जिन**चन्द्राभिधे सुगुरौ ॥१॥
श्री**र**त्नमूर्त्तिवाग्गुरुशिष्येण तु **मे**रुसुन्दराख्येन ।
**क**र्पूरप्रकरस्य व्यधायि बालावबोधोऽयम् ॥२॥

श्री**ख**रतरगच्छि श्री**जिन**भद्रसूरिनइ पाटि श्री**जिन**चन्द्रविजयमानि वाचनाचा[र्य]-**र**त्नमूर्त्तिगणिने शिष्ये श्री**मे**रुसुंदरोपाध्याये श्री**डु**गापुरनगरि आसो सुदि १५ दिने श्री**क**र्पूरप्रकरनु बालावबोध कीधउ ॥ इति श्री**क**र्पूरप्रकरणबालावबोधः समाप्तः ॥

[ 5526 ]

**अन्तः**– इति श्रीमदात्रेयबालकृष्णभट्टकृतौ विद्वद्भू[षण]सत्काव्यस्तुतिप्रकरणम् ।

इति श्रीमद्बुधस्तुत्यबालकृष्णसुधीकृतः ।

विद्वद्भूष[ण]संज्ञोऽयं सम्पूर्णः पद्यसङ्ग्रहः ॥६८॥

निधि-पक्ष-वसु-क्षिति(१८२९)संच्छर[संवत्सरा]दि प्रवराश्विनि मासि दले च सिते।

बुधवारमुकन्दतिथौ सुखदे विधुचन्द्रकयागतरात्र मले (?) ॥

लिलिखे मुनिमाणिककेन वरं किल काव्यमिदं बुधमोदकरम् ।

विदुषां वरकण्ठविभूषणकमविबोधकतोटकसद्वचनम् ॥२॥ युग्मम् ।

[ 5529 ]

**अन्तः**– वृत्तैर्विंशतिभिश्चतुर्भिरधिकैः सल्लक्षणेनान्वितै-

ग्रन्थं सज्जनचित्तवल्लभमिमं श्रीमल्लिषेणोदितम् ।

श्रुत्वात्मेन्द्रियकुञ्जरान् समदतो रुन्धन्तु ते दुर्जयान्

विद्वांसो विषयाटवीषु सततं संसारविच्छित्तये ॥२५॥

व्याख्यानार्थं कथानां च शिष्याणां हितहेतवे ।

आत्मचित्तप्रबोधार्थं सुबोधार्थं महोद्यमः ॥४॥

षट्दर्शनभाषाज्ञः ज्ञानधारी उदारवान् ।

तथाप्यार्हन्मतेनैव कीर्त्यते सर्वसङ्ग्रहात् ॥५॥

संप्रत्येवास्ति क्षेत्रेऽस्मिन् भारते चार्यखण्डके ।

श्रीजिनवल्लभः सूरिपट्टे श्रीजिनचन्द्रजे ॥३३॥

वैरङ्गिकः श्रीजिनवल्लभाह्वः पुनः गुरुः श्रीअभयादिदेवः

इति श्रीसज्जनचित्तवल्लभमहाकाव्यं समाप्तम् ॥

अमदावादमध्ये लि० व्यासबनसी। संम(व)त् १९४९ मीगसर सुदि ११॥

[ 5538 ]

**अन्तः**– करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता

मुखे सत्या वाणी विजयि भुजयोर्वीर्यमतुलम् ।

हृदि स्वच्छा वृत्तिः शुभमधिगतं च श्रवणयो–

र्विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥१॥

अचिन्त्याः पन्थानः किमपि महतामन्धकरिपोर्यदक्ष्णाऽभूत्तेजस्तदक्त........।

[ 5568 ]

**मू०अन्तः**–इति काव्यसंग्रहसुभाषितसूक्तावलिः सम्पूर्णा ।

संवत् १८७३ ना वर्षे श्रावणशुद ११ दिने रविवासरे लिपीकृतं मुनिग्या(ज्ञा)नसागरजी वाचनार्थे श्रीटीकरनगरे ।

**स्त०अन्तः**—इति काव्यसंग्रह सुभाषित संपूर्ण छे ।

संवत् १८७३ ना वर्षे श्रावण शुदनी १५ दिने बुद्धवासरे लिपीकृतं मुनिग्यांनसागरजीवाचनार्थे । नगरटिकरमध्ये झालाश्रीखेंगारजीराज्ये ।

[ 5582 ]

**मू०अन्तः**—आसीत् सद्गुणसिन्धुपार्वणशशी श्रीमत्तपागच्छपः

सूरिः श्रीविजयप्रभाभिधगुरुर्बुद्ध्याजितस्वर्गुरुः ।

तत्पट्टोदयभूधरो विजयते भास्वानिव श्रीप्रभ—

सूरिश्रीविजयादिरत्नसुगुरुर्विद्वज्जनानन्दभूः ॥३८॥

विख्यातास्तद्राज्ये प्राज्ञाः श्रीशान्तिविमलनामानः ।

तत्सोदरा बभूवुः प्राज्ञाः श्रीकनकविमलाह्वाः ॥३९॥

तेषामुभौ विनेयौ विद्वान् कल्याणविमल इत्याद्यः ।

तत्सोदरो द्वितीयः केशरविमलाभिधोऽवरजः ॥४०॥

तेन चतुर्भिर्वर्गे रचिता भाषानिबद्धरुचिरेयम् ।

सूक्तानां मही(णि)माला मनोविनोदाय बालानाम् ॥४१॥

वेदेन्द्रियर्षि-चन्द्रप्रमिते (१७५४) श्रीविक्रमादाविति वर्षे ।

अग्रन्थि सूक्तमाला केशरविमलेन विबुधेन ॥४२॥

इति श्रीसूक्तमाला सम्पूर्णा ॥

सूक्तमालाकथाकारप्रशस्तिः—

प्रणम्य पार्श्वनाथाय सर्वसम्पत्तिदायकम् ।

यस्य प्रसज्यते प्राप्तिर्मानसन्मानपूर्वकम् ॥१॥

सम्प्रति पाट प्रभाकरु, जग जस सबल प्रताप ।

श्रीविजेधर्मसूरि सेवथी, मिटे पाप ताप संताप ॥२॥

तपगछनायक गुणनिधि, श्रीविजेदेवसूरिंद ।

कुअरविजयसुत सुंदरु, विनयविजय गुणवृन्द ॥३॥

नित्य देव-गुरु वंदीइ, कोविदकुलकोटिर ।

कपूरविजय शिष्य तेहना, सत्त्व पराक्रम धीर ॥४॥

सकल पण्डितशेखर समा, क्षमाविजय कविराय ।

मम गुरु प्रतिदिन सेवतां, धर्मविजय सुख थाय ॥५॥

आज्ञाकारी तेहनो, धर्मनाम मुनिराज ।
सूक्तावली सुन्दर रची, कथाबन्ध सुखकाज ॥६॥
पंडित जिन मोटा थया, कहिं कथा केइ भाँति ।
पुनरपि आणी कीहां कणें, नवनवी केही वाति ॥७॥
जेणे जिम जाणी तिम कही, मति सारु विस्तार ।
जे वली पंडितवर मोटीका, कर्यो तास उद्धार ॥८॥
अनेक चरित्र विलोकीने, परशासनना ग्रन्थ ।
तिहांथी जोयो विचारीने, कीधो सुगम संबन्ध ॥९॥
संवत् अढारसत्तावीशे (१८२७), भाद्रवो वरमास ।
धर्मविजय आनन्दथी, सफल फली मन आस ॥१०॥

इति सूक्तावलीग्रन्थे वर्गचतुष्टये कथासम्प्रदानः, सर्वाः कथाः संपूर्णाः पं० यत्नलिखिताः ॥

[5607]

**आदिः**—सिद्धिवहू मणरंजणु परमणिरंजणु भुअणकमल सरणेसरु ।
पणविवि विग्घविणासणु णिरुवमसासणु रिसहणाहु परमेसरु ॥१॥

**अन्तः**—गउ भरहो विमोक्खु विसुद्धमइ विविहकम्मबन्धेहि चुओ ।
फणि खेयर किन्नर पवरणर पुप्फदन्तगणसंथुओ ॥२५॥

इय महापुराणे तिसट्ठिमहापुरिसगुणालंकारे महाकइपुप्फदन्तविरइए महाभव्वभरहाणुमणिए महाकव्वे सगणहररिसहणाहभरहणिव्वाणगमणं णाम सत्ततीसमो परिच्छेओ सम्मत्तो संधि ॥३७॥ ग्रन्थाग्रम् ८००० पद्धडी सं० ७५१॥

**प्रशस्तिः**—संवत् १५५५ वर्षे आसउज सुदि २ सोमवासरे श्रीद्रौपद्यास्थाने श्रीआदिनाथचैत्यालये खानश्रीअल्लावलखानराज्यप्रवर्त्तमाने कुन्दकुन्दाचार्यान्वये बलात्कारगणे सरस्वतीगच्छे श्रीमूलसङ्घे भट्टारकश्रीपद्मनन्दिदेवास्तत्पट्टे भट्टारकश्रीशुभचन्द्रदेवाः तत्पट्टे भट्टारकश्रीजिनचन्द्रदेवाः तदाम्नाये सहिलवालान्वये चौ०धीराभार्या धीरश्री तयोः पुत्रौ जिनशासनउद्धरणधीरौ चौ० दील्हाहीरादेवाख्यौ । चौ० दील्हाभार्याचउधरणिदेल्ही तयोः पुत्राः जिनशासनप्रवीणाः चौ०रामा लखमण अमरदेव चांदाचौ०हींगा एतेषां मध्ये चौधरी रामा-भार्याट्टमा तत्पुत्र चतुर्विंशतिजिनचरणकमलभ्रमरपञ्चमीउद्धरणधीर चौ०धनराजभार्यामलो तत्पुत्राः जिनपूजापुरन्दरकलिकालश्रेयांसावतारो उभयसङ्घभारधुराधरणधुरन्धरजिनशान्तिकादिमहोत्सवोपार्ज्जितागण्यपुण्यसन्तानयशःकर्प्पूरपूरसुरभीकृता दिगङ्गनावदनाहारादिदानचतुर्विधवृद्धिनयेन प्रीणित-

सदा चौधरीलउदिव-तद्भार्या सर्व्वलक्षणसंपूर्णसवीरी तत्पुत्र २ प्रथम मल्लिचन्द-भार्यावीरो द्वितीय पृथ्वीमल्ल-भार्या प्यारी । द्वितीय भ्राता चौ०करमू-भार्याकमलश्री । सरो तत्पुत्र वेगराजः तृतीयभ्राता चौ०सायरतद्भार्याचौधरणिछजो तत्पुत्र कुमरपाल । चतुर्थभ्राता चौ०अरजन-भार्याकरमा । तत्पुत्रधरम चौ०धनराजः । द्वितीयभार्या चौ० पाल्ही । तत्पुत्र पंचायणभार्यापिथो—एतेषां मध्ये चतुर्विधसङ्घधुराधरणधीरचतुर्विधदान-वितरणे कल्पवृक्षपरमधार्म्मिकदीवानदीपकसज्जनकुमुदविकाशनैकचन्द्रदुर्ज्जनगिरिस्फोट-नैकवज्रसमुद्रवद्गम्भीरमेरुवद्धीर जिनशासनधर्म्मउद्धरणप्रवीणचौ०सायर तत्पुत्रचतुर्विधदान-वितरणकल्पवृक्षान् परोपकारकरणैकदक्षान् सदाकृतधर्म्मपक्षान् अनवरतविहितकुन्थ्वादि-जीवरक्षान् जिनशासनोद्धरणधुराधुर्यान चतुर्विधसङ्घभारनिर्वाहणवर्यान् अनेकार्थजनाशा-विश्रामान् सदा धर्म्मकरणाभिरामान् जिनशासनरत्नाकरवर्द्धचन्द्रान् सदा भव्यजन-कृतभद्रान् जिनपादोदकपवित्रितोत्तमाङ्गान् सदा विहितसाधुजनसङ्गान् निर्म्मलसम्यक्त्व-मुक्ताहारान् निर्म्मलपञ्चाणुव्रताचारान् देवपूजादिषट्कर्म्मकरणतत्परान् सदादानादिव्ययप्रनिज-करान् अनेकराजसभावचनपरिपाटीपटिष्ठान् सर्वमहाजनगरिष्ठान् चौधरीकुमरपाल-तद्भार्या शीलतोयतरङ्गिणी चौधरी सनुषा चौधरी कुमरपालआत्मश्रेयार्थे चतुःप्रकार-पुरुषार्थसिद्ध्यर्थे तीर्थङ्करगोत्रनिमित्तार्थे आत्मकर्मक्षयार्थे तेनेदं महापुराणग्रन्थं लिखापितम् ॥

ज्ञानवान् ज्ञानदानेन निर्भयोऽभयदानतः ।
अन्नदानात् सुखी नित्यं निर्व्याधिर्भेषजाद् भवेत् ॥१॥

[ 5652 ]

वीरजिणेसर पयकमल पणमीय बुह(बहु)विय भत्ति,
तवगच्छ गणहर गुणगहण निसणउ एकचित्ति ।
धरणीयलि धीरमनि लउ सिरी धनेसरसूरि,
चरमजिणेसर चित्तपुरे ठावि साहस धीरि ॥१॥

भुवणविभूसण गुरुरयणसूरीसरउ वणिंद
भवियण जणमणतणनयण पोयणवण ।
घण चंद केलिमण बलकुंडलनिद्दलण हरणकरणगुणसार
देवभद्दगणि उवज्झा अच्छ नइ उचयलच्छीय उरिहार ॥२॥

गजनंदण गजगयगमण मयगयमट्टियमाणु
विजयवंतु विजयं(यें)दु गुरुजिणसासण महभाणु ।

मेहमहाभड दलदलण बोहिय देस निवेस
वयरसेणसूरीस नमि फेडिसु पाय असेस ॥३॥
पदमचंदसूरि पयकमल पणमउं मनउलासि
जस दरिसणि सवि भवियजन पडइं भवह पासि ।
कल्प कथारस पत्थरण विरइय गंथ अणेग
क्षेमकीर्त्तिसूरि क्षमापरो वंदउं मणसंवेगि ॥४॥
कणइकलस जिम निम्मूलउ ओगुणगण अमीयभंडार
हेमकलससूरिगुरु नमउं कलि गोयम अवयार ।
जस भरि धवलीय दसइ दिसइ पणवय निद्दगभाव
पणमउं जसोभद्दसूरि गुरु मदीय भवदवताव ॥५॥
सुयजललहिरि सोहामणुए तव जव रयण अधार
रयणायरगच्छमंडणइ ए सूरि रयणायर सारु ।
तिहुयण जगडण मयणभड हेलां मदीय माण
मणिसेहरिसूरिपयजुयल नमंता नितु सुविहाण ॥६॥
कोह–मोह–भय–मयमयण णाराय रोस दवनीर
धर्म्मदेवगुणह चलणा नमइं ति नरवरवीर ।
नाणपयासिय समयनय पसाहु
कमलवण चंद नमी मह मणि परमाणंद ॥७॥
जल–थल–खचर जीवगण पालिय अभयादाणि
अभयसिंहसूरि मनि धरउ वरसइ अमीय वक्खाणि ।
हेमचंदगुरु चंद जिम सिंचइ अमीयरसेण
चित्तगच्छि चंदकुलि मंडणा ए वंदउं सूरिकमेण ॥८॥
सयलकलागुणि सयलयुगि पयडिय नियमाहप्प
देसणवसि रसि कुल सनिसि फेडय भवियविकल्प(प्प) ।
शम दम संजम निय जम अज्जव–मद्दवजुत्त
जय जय जय जयतिलकगुरु जिणसासणि जयवंत ॥९॥
धरम पयासिय धरणितलि धम्मसेहर गुरुराय
माणिसूरि महिमानिलउ नितु नितु पणमउ पाय ।
रयणसागरसूरि रंगभरि भवियण सुहदायार
रयणसिंहसूरि सुगुरु नमी तरिसिउं एउ संसार ॥१०॥

ईण अनुक्रमि मुनि रतनगणि उवज्झराय पणमेसु

येर रयणाधिक पवन्नि करमकुत्तर पमुह असेस ।

मण तण वयण एकंति करी जं वंदइ नरनारि

रिद्धि वृद्धि मंगल विउल सुह पामइं ते सुविचार ॥११॥

॥ इति श्रीगुरुनामावली समाप्ता ॥

[5653]

पणमवि चउवीस वि जिणचलण, रिद्धि वृद्धि सवि मंगलकरण ।
तपागच्छ तिहूयणि जयवंत, गायसु गुरु गुरूया गुणवंत ॥१॥
चउवीससु जिणेसरु वीरु, पाप ताप दम(वड)वानल नीर ।
जिणसासण केरु शणगारु, पढम सीसु गोयम गणधारु ॥२॥
सुहमसामि गणधर पांचमउ, तस पयकमल सहू कोइ नमउ ।
जेह थकइ जिणशासणि विस्तार, मुणिवर विहरइं भरह मझारि ॥३॥
जंबूसामि भणूं गुरुराय, मोह तणउ जिणि फेडिउ ठाउ ।
केवलसिरि पटराणी हूई, जेहे विण एकू क्षण नवि रही ॥४॥
प्रभवसामि सिज्जंभवसूरि, यशोभद्र दीठउं दारिद्र दूरि ।
चउथा सूरीसर संभूतिविजय नमंतां सुखसंभूति ॥५॥
भद्रबाहुसामी बलिवंत, थूलिभद्र हूउ जिइवंत ।
छइ ए हूआ श्रुतकेवली, मोहमयण मूक्या निर्दली ॥६॥
अज्जमहागिरी अज्जसुहत्थि, वयरसामि सम कोइ न अत्थि ।
झोली पउढद्या लागु रंगु, अवडाव्यां अग्यारइ अंग ॥७॥
वयरसामिनुं शाखा च्यारि, चंद्र नागेंद्र निवृत्ति अवधारी ।
विद्याधर पण चउत्थी होइ, जिणसासणि जाणइ सहु कोइ ॥८॥
ईण अनुक्रमि मुणिवर बहूत, संख न जाणुं केवलि रहित ।
चंद्रगच्छि गुरु हूया भूरि, पहिलउं नमिसु धनेसरसूरि ॥९॥
चैत्रइ पाटणि हूई देसना, देगंबर प्रतिबोध्या घणा ।
ईण अवदाति जगि अभिराम, चैत्रीवालगच्छ रहइं नामु ॥१०॥
हूया भुवनचंदसूरिंद, जस पय वंदइ तीस नरिंद ।
बार भेदि तप निरमलि काय, वांदू देवभद्रगणि उवज्झाय ॥११॥
सूधा आगम हीयडइ धरी, सामाचारी जीणि उद्धरी ।
तपागच्छनउ थापिउ पाटु, सवि कहिरइं देषाडी वात ॥१२॥

सयल कुटंबउं आगलि करी, जिणि आराधी संजमसिरी ।
तपागच्छनउ तरूअरुकंदु, वांदू विजयचंद्रसूरिंद ॥१३॥
क्षेमकीरतिसूरि प्रज्ञावंत, कल्पवृत्ति कीधी सिद्धंत ।
वयरसेणिसूरीसर चंगी, पदमचंद्रसूरि वांदुं रंगि ॥१४॥
हेमकलससूरि गरूया जाणि, अमृत समाणी जेहनी वाणि ।
राय राणा प्रतिबोध्या घणा, पार न पामुं गुण तीह तणा ॥१५॥
यशोभद्रसूरीसर एकंत, पापु पणासइ पाय प्रणमंत ।
वात एक हिव साची कहउं, रतनागर गुण पार न लहउं ॥१६॥
सेवक जन मनवंछित फलइं, जिनशासनि जस जस झलह[ल]इ ।
तपागच्छमांहि प्रगटिउं नामु, श्रीरतनागरसूरि प्रणामु ॥१७॥
रयणप्पहसूरि गणहररयण, हेलां हारि मनाविउ मयण ।
श्रीमुनिशेखरसूरि प्रधान, संयम-शम-दम योगनिधान ॥१८॥
श्रीधर्मदेवसूरि क्रियाकठोर, आठ करम जीत्यां अतिथोर ।
श्रीवाणचंद्रसूरि निरमल नाणु, जिणसासणि गयणांगणभाणु ॥१९॥
क्षमावंत निरमल निरमाय, तपतेजिइ जस निरमल काय ।
संयमसिरि मुखमंडण भयउ, अभयसिंहसूरीसर जयउ ॥२०॥
पूनिम केरु निरमल चंद, तिसा बखाणउं गुरु हेमचंद ।
डाहा आगमगंथि विचारी, आचारज पदे थाप्यां च्यारि ॥२१॥
श्रीश्रीमालवंश शिणगारु, कामलदेवी तणउ मल्हारु ।
धारागरकुल नहीयलि चंद, श्रीश्रीजयतिलकसूरिंद ॥२२॥
जयवंता जगि करइं विहार, प्रगटइं बहु सित विचार ।
श्रीजयतिलकसूरि मनि धरइ, रिद्धि वृद्धि तीहं सयंवर वरइ ॥२३॥
साची सिरिमाणिकसूरिबुद्धि, आगमग्रंथनी जाणइ शुद्धि ।
कलियुगि जाणउं गोयमसामि, लबधि वसइं जिहां जीहंनइ नामि ॥२४॥
पूरव सूरि तणउ आचारु, प्रगटइं जयवंता सविचार(रु) ।
श्रीधर्मशेखरसूरि नमंति, ते नर निश्चइ सुख पामंति ॥२५॥
तपागच्छि गुरूया गुरुराय, तपतेजिइ जस निरमल काय ।
जाणइ लक्षण छंद पुराण, अमीय समाणउं करइं वखाणुं ॥२६॥
मोहमयणु बेउ द्रवड्यां दूरि, प्रभु वांदउं रत्नसागरसूरि ।
चारित्रलक्ष्मी उरवरि हारु, निर्मल गुणरयणह भंडारु ॥२७॥

रयणसिंहसूरीसर रयण, दीठइ त्रिपतां थाइ नयण ।
जगत वदीतउ जीतउ मयण, साचउ कीधउ जिननुं वयणु(ण) ॥२८॥
सिरिमुनिरत्न नमूं उवज्झाय, जाइ पाप नमतां जेह पाय ।
सरल चित्त नइ रूपि अपार, जाणइ सयल शास्त्र सुविचार ॥२९॥
जयवंता पणमूं उवज्झाय, जयमूरति तपि निरमल काय ।
साधइ पवननइ जाणइ तत्त्व, संयम विषइ जीहं निरमल चित्त ॥३०॥
चंदनबालादिक महासती, सीलसुगंधिइ जस वासती ।
सूधउं चारित्रु प्रतिपालती, सोल सतीनइ छलि जागती ॥३१॥
श्रीमेरुचूला महुत्तर सपाट, धर्मतणी अजूयाली वाट ।
रतनचूला अच्छ महत्तर, वांदउं जयवंता सउ वरस ॥३२॥
श्रीरतनागरगच्छि विदवांस, जे जे रत्नाधिक पडच्यां हंस ।
महासत महासती सविहुं नाम, करजोडीनइ करउं प्रणामु(म) ॥३३॥
इण परि सहु गुरु केरां नाम, लेई नइ जे करइ प्रणामु(म) ।
मनसा वाचा कायविशुद्धि, तीहं तणइ घरि अविचल रिद्धि ॥३४॥

॥ इति गुरा(र्वा)वली समाप्ता ॥

[ 5664 ]

अन्तः—ता सिरिमालह मंडणु पावविहंडणु थप्पिउ जिणेसरसूरि ।
ता भविअहु वन्दहु जिम्ब चिर, नन्दहु दुरिउ पणासइ दूरि ॥४॥

शांतिनाथ बोली ॥

( नवमपत्रे लिखितमिदम्— ) मोल्हणयोग्यः ॥

( त्रयोदशपत्रे लिखितेयं पुष्पिका— )

संवत् १३५० आषाढ सुदि ५ पत्राणि लिखितानि बोलीसूक्तानि ।

( अष्टादशपत्रे लिखितेयं पुष्पिका— )

शान्तिनाथ बोली । संवत् १३५० चैत्र सुदि १ रवौ रेवतीनक्षत्रे श्रीजिनेश्वरसूरिशिष्येण विनयसमुद्रे[ण] मुनि[ना] देवराजपुरस्थितेन महीधरपुत्रमोल्हणनिमित्तं कलस-बोली पत्राणि लिखितमि(तानी)ति ।

सुन्न-सर-राम-रूवे (१३५०) चित्ते सियपक्खि पडियरेवइए ।
कलसा-बोलीपत्तो विनयसमुद्देण लिहियाणि ॥
देवराजपुरे नयरे रविवारे पत्तयाणि लिहियाणि ।
सिद्धिमहाधरतणयमोल्हण नामा(म) निमित्तेण ॥

[ 5669 ]

**आदिः—** श्रेयः पल्लवयन्तु वः प्रतिदी(दि)शं संसारदावानलं
द्रागनिर्वापणकेलिलम्पटतया ते पुष्करावर्त्तकाः ।
वाचा वीरजिनेश्वरस्य निचयाः सद्धर्मकल्पद्रुमो-
ल्लासप्रीणितमुक्तियौवनभराः प्रौढस्पृहाः प्राणिनाम् ॥१॥

**अन्तः—** ता वांदिअ देवसूरिपाय प्रणमवि अनइ पुण्यदेवसूरि
ता छंदि आगम-तक्क सुन्दर सुगुरु रामचंदसूरि ।
ता जयउ मंगलसूरि बोलइ महावीराभिसेय
ता कणय-कलसहिं न्हवउ भविअह पूजउ एह जि देवा ॥१५॥

इति श्रीमहावीरकलसः सम्पूर्णः ।

[ 5674 ]

**आदिः—** मुक्तालंकारविकारसारसौम्यत्वकान्तिकमनीयम् ।
सहजनिजरूपनिर्जितजगत्त्रयं पातु जिनबिम्बम् ॥१॥

**अन्तः—** रिसहमज्जणु रिसहमज्जणु करि असुरराय
उप्पाडिअ जय जय करिय जणणिपासि मिल्हिवि जत्ता
नंदीसरि अट्ठदिवस करीय देव नीय ठाणी पत्ता ।
इणी परि सयल जिणेसरह न्हवण करइं बहुभत्ति
मुणी रयणायर-पावहर जिम तुम्ह दिउ वरमुत्ति ॥११॥

इति श्रीआदिनाथजन्माभिषेकः समाप्तः ॥

[ 5676 ]

**आदिः—** जम्ममज्जणि जम्ममज्जणि जिणह वीरस्स पादद्वयसुरगणिग
मेरुसिहरि इंदेण चिंतिय किम सहिइस्यइ तुच्छ तणु ।
जलपवाह सुरखित्ति इत्तिअ पुण अमुणिय जिण बलकलिय
इय चिंतिय सुरिंदलीलहि चालिय वीरजिण वामगपग्गि गिरंद ॥१॥

इति श्रीमहावीरदेवजन्माभिषेकः समाप्तः ॥

[ 5677 ]

**आदिः—** जयउ सयल सुरासुर नमिय पाय, जयउ कंचण कोमलविमलकाय ।
जयउ सुन्दर सोहगसिरि सोहाय, जयउ संतिजिणेसर भुवणराय ॥१॥

**अन्तः**— कलश—इय थुणिअ सुज्झाणइ पंचकल्लाणइ, अणहिलपुरसिरितिलयवरे ।
सिरिसंतिजिणेसर भुवणदिणेसर, हवइ विजियसिरिसंतिकरे ॥
इति श्रीशान्तिनाथजन्माभिषेकः समाप्तः ॥

[ 5685 ]

**आदिः**— सिद्धि समिद्धि पसिद्धि विद्धि मंगल कल्लाणय
जेसि पसाइ लहंति लोय—इहलोय विमाणय ।
तेसि अजिय-संतीण पायपंकय पणमंतहं
संपज्जउ मणवछियत्थ भवियह गुणवंतहं ॥१॥

**अन्तः**— इय पक्खिय-चउमासियम्मि संवच्छरि अवसरि
जे जिय संतिजिणिंदु नमहिं उल्लसिय हरसभरि ।
ते सुहगुर सिरिवयरसेणसूरिसीसु पयंपइ ।
पावहिं परमाणंद पूर पूरिय सुहसंपइ ॥१५॥
इति श्रीअजित-संतिनमस्कारं समाप्तम् ॥
सं० १४८६ वर्षे पौषवदि १२ हेमकुमारगणियोग्यं लिषितं महिराजेन ॥

[ 5704 ]

**मू०अन्तः**— इत्थं भषेज-यन्त्र-तन्त्रकलितैः सन्मन्त्ररत्नैः श्रिता
कृत्वा श्रीमुनिसुन्दरसुतनुतैर्देल्हुल्लनेतस्तव ।
लक्ष्मीसागरनामधेयकरुणाम्भोधे युगादिप्रभोः
दुस्थोऽहं शुभसुन्दरोक्तियुगलीसेवासुखं प्रार्थये ॥२२॥
इति श्रीदेल्हुल्ला-श्रीआदिनाथमन्त्रमयस्तवनम् ॥

[ 5725 ]

**वृ० आदिः**— अत्रायं वृद्धसम्प्रदायः— पुरा भगवान् श्रीअभयदेवसूरिर्गूर्ज्जरत्रायां शम्भाणकस्थाने विहृतवान् । तत्र च महाव्याधिवशेनातीवशरीरापाटवे सति प्रत्यासन्ननगरग्रामेभ्यः पाक्षिकप्रतिक्रमणाय समाजिगमिषुर्विशेषेण समाहूतो मिथ्यादुष्कृतदानाय सर्वश्रावकसङ्घः त्रयोदशीअर्द्धरात्रे चाभाणि शासनदेवतया—प्रभो ! स्वपिषि जागर्षि वा ? ततो मन्दस्वरेणोक्तं भगवता—जागर्मि । पुनरूचे तया—प्रभो ! शीघ्रमुत्तिष्ठ, नवैताः सूत्रकुत्कुटिका उन्मोचय । भगवानाह—न शक्नोमि । देवता प्राह—कथं न शक्नोषि ? अद्यापि चिरकालवीरतीर्थं प्रभावयिष्यसि नवाङ्गीवृत्तिं च विधास्यसि । भगवानवोचत्—कथमेवंविधशरीरो विधास्यामि ? देवताऽवादीत्—स्तम्भनकपुरे सेढिकानद्युपकण्ठे खंखरपलासमध्ये श्रीपार्श्वनाथः स्वयंभूरस्ति । तत्पुरो देवान् वन्द

स्वयमेव सुस्थशरीरो भव(भविष्य)सि । ततः सा तिरोऽभूत् । प्रातःक्षणे प्रत्यासन्ननगर-ग्रामेभ्यः समागत्य श्रावकसङ्घेन ववन्दे भगवान् । भणितं च भगवता—स्तम्भनकपुरे श्रीपार्श्वनाथं वन्दिष्यामहे । श्राद्धैरचिन्ति—नूनं कश्चिदुपदेशः प्रभूणां येनेदमावेदयन्ति । ततस्तैर्भणितम् । वयमपि वन्दिष्यामहे । ततो वाहनेन गच्छतः प्रभोर्मनाकूशरीर-सौख्यमभूत् । ततो धवलकपुरात् परतः पादचारेण विहृतवान् स्तम्भनकपुरम् । श्रावकाः सर्वतः पार्श्वनाथमवलोक्यन्तो गुरुणाभिहिताः । खंखरपलासमध्ये अवलोकय, ते तथाचक्रुः । ततस्तत्र दृष्टा श्रीपार्श्वनाथप्रतिमा केवलं गोपालवचनात् । तत्र च प्रत्यहं गौरिका समागत्य प्रतिमामूर्ध्नि क्षीरं क्षरति । ततो हृष्टैः श्रावकैर्यथादृष्टं निवेदितं गुरोः पुरतः । ततः श्रीअभयदेवसूरिस्तत्र गत्वा दर्शनमात्रे एव स्तोत्रं प्रववृत्ते० ।

**वृ० अन्तः**— एवं सति प्रसीद पार्श्वनाथ स्तम्भनकपुरस्थितः ।

इत्येवं मुनिवरः श्रीअभयदेवसूरिर्निवाङ्गीविवरणकरणानन्दितभूरिसूरिः विज्ञपयति । अनिन्दितत्रिलोकलोकश्लाघितः । जयतिहुयणवृत्तिः समाप्ता । ग्रन्थाग्रम् २५० ।

[ 5731 ]

**अन्तः**— सुहनवमी सुविही जिणो निव्वुओ, केवली नेमि आसो अमावसि हुओ ।
पुन्निमासिइ नमि तित्थनाहो, चुओ कुणउ महमंगल सोमसूरिप्पभूओ ॥

इति श्रीजिनकल्लाणकथुत्तं सम्मत्तं ॥

[ 5732 ]

**अन्तः**— इय पउमा-धरणिंदजक्खिंद नमंसिय
वंछियदाणसमत्थतित्थकामिगजणवन्निय ।
सेवगजणपच्चक्खपासजीराउलि संठिय
लखिमीसागरसूरिसीस संथुणइ आणंदिय ॥२५॥

इति श्रीपार्श्वनाथस्तोत्रम् ।

श्रा० लखाईपठनार्थम् । लिखितं पं० जिनमाणिक्यग० सच्छिस० ।

[ 5741 ]

**अन्तः**— इति श्रीपार्श्वनाथस्तवनटीका समाप्ता ।

कहइ वाणारीउ पुणकलसो इमं, धवण जिम दिट्ठ तिम लिहवि मंते समं ।
किंपि विणीइ जिणगुणविघणदुक्खियं, तं गुणंता तयं होउ जगि सुक्खियं ॥३६॥
इति श्रीसम्पूर्णस्तवनं श्रीपार्श्वनाथस्य । संवत् १८४६ ना वर्षे कार्तिक वदि१दिने ।

[ 5756 ]

**आदिः**— पहिलुं पणमीय देव परमेसर सेत्रुंजधणीय ।
पयपंकयरथसेव रंगिहिं विरचिसु तस तणीय ॥१॥

**अन्तः**— ईय रिसहजिणवर सिद्धि सयंवर सुंदरीवरसुंदरो
सिरिविमलभूघर धवलसिघर खंधवास पुरंदरो ।
सेवइ सुभासुर थुणिय भासुरगुरुभवासरभंजणो
महुसविह वासणु देह सासण विजयतिलय निरंजणो ॥१॥
इति विचारस्तोत्रम् ॥

[ 5778 ]

**अन्तः**—इति श्रीयोगेन्द्राचार्यकृतपरमात्मप्रकाश नाम अध्यात्मग्रन्थसूत्रं सम्पूर्णम् ॥ सं० १७६३ ना मास अश्वनी शुक्लद्वितीयादिने रुविवारे श्रीराधिकापुरनगरे लिखितं कटुगच्छेश सा०लाधा थोभणसी स्ववाचनार्थम् ॥

[ 5804 ]

**आदिः**— वृत्तौ भाष्ये तथा धातु-नामपारायणादिषु ।
विप्रकीर्णस्य तन्त्रस्य क्रियते सारसङ्ग्रहः ॥१॥
इष्टयुपसङ्ख्यानवती शुद्धगणा विवृतगूढसूत्रार्था ।
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम ॥२॥
व्याकरणस्य शरीरं परिनिष्ठितकार्यमेतावत् ।
शिष्टः परिकरबन्धः क्रियतेऽस्य ग्रन्थकारेण ॥३॥

[ 5806 ]

**अन्तः**— संवत् १७४६ वर्षे आश्विनमासे सितेतरपक्षे १० शनिवासरे प्रकाशीकृताब्जपुरनिवासिना भट्टजीवनेन लिखितोऽयं कौमुदीउत्तरार्द्धः समाप्तः ॥

[ 5809 ]

**अन्तः**— सिद्धान्तकौमुदीव्याख्या सेयं प्रौढमनोरमा ।
भट्टोजीदीक्षितकृतिर्भूयाद् विशेषतुष्टये ॥१॥

इति श्रीपदवाक्यप्रमाणज्ञश्रीलक्ष्मीधरसूरेः सूनुर्नाम भट्टोजीदीक्षितेन विरचितायां प्रौढमनोरमायामुत्तरार्द्धं समाप्तम् ॥

[ 5812 ]

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीवामनेन्द्रस्वामिचरणारविन्दसेवकज्ञानेन्द्रसरस्वतीकृतौ सिद्धान्तकौमुदीव्याख्यायां तत्त्वबोधिन्याख्यायां तिङन्तकाण्डं समाप्तम् । तत्त्वबोधिनी समाप्ता । संवत् १७४५ सैः फा. व. ६ शनिवार सुकरवार ली. दुघरन ॥

[5816]

आदिः— श्रीमद्विट्ठलमेकमव्ययमजं शब्दात्मकं ब्रह्म यः
स्वेच्छातो जगदुद्भवस्थितिलये हेतुः स्वमायागुणैः ॥
यच्छ्वासः श्रुतिसंततिव्यवहृतिः स्वपुण्डरीकाश्रमे
भक्तानुग्रहहेतुतः स्थितमहं वन्दे मुदे संविदे ॥१॥
श्रीशम्भुं पाणिनिं श्रीवररुचिमथवा वाक् संस्कृतौ दीक्षितं
श्रीशेषं भाष्यहार्दप्रकटनपटुगीः पण्डितान् भर्तृमुख्यान् ।
वृत्तिन्यासादिकर्तॄन् स्वमतपरमतव्यापकान् भोज-दुर्ग-
क्षीरस्वामिप्रमुख्यान् प्रगुणमतिभजे तन्मतिज्ञप्तिहेतोः ॥२॥
किं शेषः पाणिनिर्वा वररुचिरथवा सर्वविद्याप्रणेता
शम्भुर्भूमावभूद् भूसुरकुलतिलकोऽन्ध्रप्रदेशेऽव्ययवंशे ।
ऋग्वेदी सर्वशास्त्रप्रकटनपटुधीः कृष्णजो रामचन्द्रो-
ऽनन्ताचार्यप्रपुत्रो दिशतु कृतमतिर्मे स कौण्डिन्यगोत्रः ॥३॥
वन्दे तं यतिवृन्दवन्दितपदं श्रीराघवेन्द्रादि य-
न्नामाभाति सरस्वतीपरपदं वादीन्द्रविद्रावकम् ।
यो विद्याः समदाच्चतुर्दश मुदा श्रीशेषभाष्यादिकाः
शिष्येभ्यो मयि यत्कृपाऽस्ति सततं सच्छास्त्रसंवित्तये ॥४॥
लोकेऽस्मिन् यदुपक्रमं चरिद्दतीन्यौदार्यलोकाज्ञता
विद्वत्तोपकृतिक्षमासुजनतावेदोक्तधर्मादरन् ।
आचार्यं कृतकालनिर्णयमहाग्रन्थार्थसद्दीपिका
टीकन्तं नरसीहमात्मजनकं वन्दे विदां सम्मतम् ॥५॥
गम्भीरार्थां मितोक्त्या कलितसकलसच्छब्दरत्नाकरां
श्रीशेषोक्तन्यायगर्भां स्वपरमतयुतां प्रक्रियाकौमुदीं ताम् ।
व्याकुर्वन् बुद्धिहीनो यदपि तदपि........ रामचन्द्राः-
चार्योक्तः पाठरक्षाकरणगुणतया सज्जनैर्नोपहास्यः ॥६॥
तथा च पण्डितंमन्यैः प्रक्षेपैर्मलिनीकृता ।
प्रक्रियाकौमुदी तस्याः प्रासादः क्रियते मया ॥७॥
स्पष्टत्वात् समुपेक्षितानि कतिचिद्व्याख्यातकल्पत्वतो
रामाचार्यवरैरमूनि विशदं व्याख्यामि सूत्राण्यहम् ।

ग्रन्थेऽस्मिन् स्वरसाधनं कतिपयानौणादिकान् च ब्रुवे
स्थाने तांश्च गणान् यथामति तथा न्यायान् पदैः सूचितान् ॥८॥
टीकेयं विपुलेति येन विदुषा संक्षिप्यते तस्य नो
लाभः किन्तु समीहिताः पुनरमी सर्वे विशेषाहृताः ।
येनास्माभिरनेकसूरिरचितग्रन्थार्थमालोड्यत
तत्सारं सुलभं विशेषविदुषां प्रीत्यै प्रकाशीकृतम् ॥९॥

अन्तः— श्रीमद्विट्ठलपादपङ्कजयुगं वन्दे सुरैर्वन्दितं
भक्तेभ्यो ह्युभयप्रदं सुखकरं विज्ञानदं सर्वदा ।
क्षोदीयः किल यद्रजोजनितवत् पृथ्वी स्थिरान्ता धरा
या विश्वस्य विधारणेऽजनि सतां पुष्टौ समर्था श्लथा ॥१॥
वन्दे पाणिनिमीश्वरं वररुचिं शेषं तथान्यान् बुधान्
ग्रन्थान् येऽभ्यदधुः परोपकृतये सूत्रादिभाष्यादिकान् ।
पोतैस्तैस्तु नरास्तरन्ति गहनं तच्छब्दरत्नाकरं
चित्रं यत् परपारसाधनपरो देवो मरुत्वानपि ॥२॥
यस्मिन् वैदिकधर्मजातमनिशं जागर्त्ति यद्वैष्णवा—
चारानुष्ठितितुष्टविट्ठलविभुः सर्वार्थदः सर्वदा ।
ऋग्वेदादिसमस्तशास्त्रनिचयः श्रीपञ्चरात्रागमः
व्याख्यानक्षमपुरुषो विजयते वंशोऽन्ध्रदेशोद्भवः ॥३॥
तद्वंशे नररत्ननायकमणिर्जातोऽविमुक्ताङ्गजो—
ऽनन्ताचार्य इति त्रिलोकविदितः सर्वज्ञ एवापरः ।
रामस्वामियतीन्द्रवर्यविहिताचार्याभिषेकस्ततो
लब्धा वन्दितपाञ्चरात्रजनकाद्यो वल्लभानां त्रयम् ॥४॥
तत्सूनुर्निगमागमादिकुशलः सन्न्याय—वैशेषिकं
व्याकृत्य द्वयजैमिनीयभणितिष्वव्याहतप्रातिभः ।
यः सौदर्शनभाष्यमाख्यदखिलं विद्वत्सभासंनिधा—
वाचार्यो नृहरिः सदाचरणतः साक्षात्कृतश्रीहरिः ॥५॥
गोपालाचार्यमुख्याः प्रथितगुणगणास्तस्य पुत्रा अभूवन्
कृष्णाचार्यः कनीयानपि भवति गुणैर्ज्येष्ठ आसीद्वरिष्ठैः ।
यं वेदाद्याः सुविद्याः स्वयमधिवसतिवत्कुरूत्कर्षहेतो—
स्तस्मात् कृष्ण इवेत्यनुजगदुरमुं सूरयः शौरिभक्ताः ॥६॥

तस्मादाचार्यवर्यौ हरि-हरभजनप्राप्तसं[विद्]विकाशा–
वास्तां ज्येष्ठो नृसिंहोनिखिलगुणनिधी रामचन्द्रः कनिष्ठः ।
येनानेके प्रबन्धाः क्षितिपतिसमितिख्यातविद्वत्प्रबोधा
बोधार्थं चक्रिरे यैर्भवति हृदि कृतेः कोविदः प्राकृतोऽपि ॥७॥
तत्सूनुः सकलेषु शास्त्रनिवहेष्वाचार्यकृष्णागुरो–
र्लब्धा ज्ञानविशेषमात्मजनकं श्रीमन्नृसिंहं भजे ।
तत्पूर्वाश्च कलिप्रलुप्तमखिलं विद्यासमूहं तथा
धर्मास्था रचितुं क्षितौ समभवेत् ये ते च ताराहरेः ॥८॥
श्रीमद्राघवसंज्ञकं यतिवरं वन्दे गुरुं संततं
यः सर्वज्ञसमो व्यधाद भुवि नतान् श्रीयसेवापरान्
वादीन्द्रान् बहुवादिदर्पशमनान् जित्वा तथा स्नापये–
दद्वैतश्रुतिमूर्धनिर्णयचणो भाष्यादिसंस्कारकः ॥९॥
श्रीविट्ठलाचार्यगुरोस्तनुजं सौजन्यभाजं जितवादिराजम् ।
अनन्तसंज्ञं पदवाक्यविज्ञं प्रमाणविज्ञं तमहं नमामि ॥१०॥
यः शास्त्रलोकव्यवहारविद्वान् जगत् समस्तं स्ववशं ह्यतानीत् ।
तमर्भकं कृष्णगुरोर्नमामि रामेश्वराचार्यगुरुं गुणाब्धिम् ॥११॥
यत्संनिधानादभवत्तरोऽमी(सौ) विद्याधिराजाऽजितवादिराजः
आचार्यवर्यं बुधरामचन्द्रं भजामि गोपालगुरोस्तनूजम् ॥१२॥
जगन्नाथाश्रमं वन्दे यतिं वेदान्तकोविदम् ।
पदवाक्यप्रमाणज्ञं स्वधर्मे नितरां रतम् ॥१३॥
श्रीनागनाथं जितवादिनाथं विद्याधिनाथं वशराजनाथम् ।
श्रीकृष्णसूनुं विबुधं नमामि चक्रित्वयोगाजितगीष्पतिं तम् ॥१४॥
श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा–
ऽऽचार्योऽयं माणिकाबाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
सोऽहं श्रीपाणिनीयाद्यनुगुणसगुणं प्रक्रियाकौमुदीयं
व्याख्यारूपं प्रसादं विशदमकरवं विट्ठलस्तेन तुष्यात् ॥१५॥

इति प्रसादः संपूर्णो लिखितः श्रीरस्तु कल्याणमस्तु । दीर्घायुर्भूयात् । पाठकयोश्च शुभं भवतु ॥

संवत् १९२५ वर्षे फाल्गुणमासे दशम्यां तिथौ भौमवासरे श्रीमद्राजनगरे लिखितोऽयं ग्रन्थः ॥

[ 5818 ]

**आदिः—** हेरम्बमीश्वरं वाचं नमस्कृत्य पदं गुरोः ।
श्रीमदुज्ज्वलदत्तेन क्रियते वृत्तिरुत्तमा ॥१॥
वृत्तिं न्यासमनुन्यासं रक्षितं भागवृत्तिकाम् ।
भाष्यधातुप्रदीपं च तट्टीकां वर्णदेशनाम् ॥२॥
उपाध्यायस्य सर्वस्वं सुभूतिं सोमनन्दिनम् ।
कलिङ्ग-हट्ट-चन्द्रादीन् समीक्ष्यैषा कृतिर्मम ॥३॥
उणादिवृत्तयोऽनेका भूरिभिः सूरिभिः कृताः ।
तास्त्विदानीं विपर्यस्तसूत्रशब्दार्थधातवः ॥४॥
ता एवाथ समालोक्य ग्रन्थानन्यांश्च विस्तरान् ।
सर्वतः सारमाकृष्य मया वृत्तिर्विरच्यते ॥५॥
निरूप्य लिखितं सर्वं सज्जनैः सुविचारितम् ।
नमस्कुर्मः खलान् युष्मांस्तूष्णीमत्र करिष्यथ ॥६॥
योऽमुं वृत्तिं समालोच्य स्वपौरुषसमीहया ।
यन्नामोच्छेदनं कुर्यात् सुकृतं तस्य नश्यति ॥७॥
प्रत्ययानां च धातूनामागमादेशयोस्तथा ।
व्यक्तमेवानुबन्धानां फलं नोदीरितं ततः ॥८॥

**अन्तः—**इति श्रीमहोपाध्यायश्रीमदुज्ज्वलदत्तसंगृहीतोणादिवृत्तौ पञ्चमः पादः समाप्तः ॥

[ 5812 ]

**अन्तः—** इति श्रीपूर्णिमापक्षीयभट्टारकपुरन्दरश्री५श्रीमहिमाप्रभसूरीश्वरेषु विद्यमानेषु तेषां चरणारविन्दरोलम्बायमानशिष्यभावरत्नेन स्वस्य शिष्यादीनां च कृते लिखितमिदं पुस्तकं श्रीमति अणहिल्लाभिधाने पत्तने ढंढेरसंज्ञपाटके नेत्र—तुरङ्ग-तुरङ्ग-रजनीपति (१७७२) प्रमितवर्षे कार्त्तिकमासे शुक्लपक्षे षष्ठीतिथौ सूर्यपुत्रदिने शुभं भवतु ।

[5847]

**आदिः—** शब्दाकरकरग्राममर्थमण्डलमण्डलम् ।
ज्ञानात्मानमनाद्यन्तमादित्यान्तमुपास्महे ॥१॥
इन्द्र-चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमर-जैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥२॥
मतानि तेषामालोच्य सर्वसाधारणः स्फुटः ।
धातुपाठः स्वराद्याद्यकमादन्तादिमक्रमः ॥३॥

कविकल्पद्रुमो नाम पद्यैर्निष्पाद्यतेऽत्र च ।
धातवः पठिताः पाठसूत्रलोकागमस्थिताः ॥४॥
इति स्फीतः सप्तदशशत्या षट्कोनषष्टचा ।
धातुस्कन्धैर्बुधाः सेव्यं कविकल्पद्रुमं फलम् ॥५॥
विद्वद्धनेशशिष्येण भिषक्केशवसूनुना ।
तेनेवेदं पदस्थेन बोपदेवद्विजेन यः ॥६॥

**अन्तः**— इति श्रीपण्डितराजचक्रचक्रवर्त्तिबोपदेवविरचितः कविकल्पद्रुमो नाम धातुपाठः समाप्त आप्तोक्तः ।

[ 5848 ]

**अन्तः**— इत्युपाध्यायसर्वधरविरचिता या स्याद्यन्तप्रक्रिया समाप्ता ।

संवत् १५०१ वर्षे माघसुदि पञ्चमी सोमे श्रीखरतरगच्छे श्रीजिनेश्वरसूरिसन्ताने भ०श्रीजिनधर्मसूरीणां शिष्यो देवचन्द्रगणिस्त्याद्यन्तप्रक्रियामलिखत् श्रीसरस्वतीपत्तने सुशिष्याणां पठनाय ॥

[ 5851 ]

**अन्तः**— इत्युपाध्यायसर्वधरविरचितायां स्याद्यन्त प्रक्रि[ या ]यां लिङ्गकाण्डः षष्ठः समाप्तः ॥

श्रीनृपविक्रमादित्यसंवत् १४७८ वर्षे वैशाखसुदिद्वादश्यां १२ सोमवासरे श्रीखरतरगच्छे श्रीजिनकुशलसूरिसन्ताने भट्टारकश्रीजिनेश्वरसूरीणां भट्टालङ्कारचूडामणिश्रीजिनशेखरसूरयस्तेषां आचार्यश्रीकीर्तिसागरसूरीणां शिष्येण धर्मशेखरेणात्मपठनार्थं श्रीस्यादिपुस्तकं लेखितं पण्डितपुरुषोत्तमेन लिखितम् ॥

[ 5853 ]

**आदिः** - जयति जिनवरेन्द्रप्रवचनम् ॥ जयत्यनेकान्तकण्ठीरवः ॥ जयन्तु श्रीमन्तः प्रवर्त्तकश्रीकान्तिविजयास्तच्छिष्याश्च श्रीमन्तश्चतुरविजयाः । श्रीवासुपूज्याय नमः ।

श्रीपूज्यपादमकलङ्कमनन्तबोधं शब्दार्थसंशयहरं निखिलेषु बोधम् ।
सच्छब्दलक्षणमशेषमतः प्रसिद्धं वक्ष्ये परिस्फुटमलं प्रणिपत्य सिद्धम् ॥१॥
सविस्तरं यद्गुरुभिः प्रकाशितं महामतीनामभिधानलक्षणम् ॥
मनोहरैः स्वल्पपदैः प्रकाश्यते महद्भिरुपदिष्टियाति सर्वापिमार्गे (?) ॥२॥
तदुक्तकृतशिक्षश्लाघ्यमेतद्धितस्य किमुक्तमखिलज्ञैः ।
भाषमाणो गणेन्द्रो विविक्तमखिलार्थं श्लाघ्यतेऽतो मुनीन्द्रैः ॥३॥

शब्दानामनुशासनानि निखिलान्याध्यायताहर्निशं

योऽयं सारतरो विचारचतुरस्तल्लक्षणांशो गतः ।

तं स्वीकृत्य किलोत्तमं च विदुषां चेतश्चमत्कारक-

सुव्यक्तैरसमैः प्रसन्नवचनैर्न्यासः समारभ्यते ॥४॥

श्रीपूज्यपादस्वामिविनेयानां शब्दसाधुत्वासाधुत्वविवेकप्रतिपत्त्यर्थं शब्दलक्षणप्रणयनं कुर्वाणो निर्विघ्नतः शास्त्रपरिसमाप्त्यादिकमभिलषन्निष्टदेवतास्तुतिविषयं नमस्कुर्वन्नाह।

लक्ष्मीरात्यन्तिकी यस्य निरवद्याऽवभासते ।

देवनन्दितपूजेशे नमस्तस्मै स्वयंभुवे ॥१॥

**अन्तः** पुरुषे वा ॥ पुरुषशब्दे द्योः परतः कोः का इत्ययमादेशो भवति। कुत्सितः पुरुषः कापुरुषः । कुपुरुषः । अप्राप्तो विकल्पोयम् । ईषदथ पूर्वनिर्णयेन नित्यं कादेशः । ईषत्पु........ ।

[ 5861 ]

**अन्तः**— इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञतत्त्वप्रकाशिकाप्रकाशे शब्दमहार्णवन्यासे द्वितीयस्याध्यायस्य चतुर्थः पादः संपूर्णः ।

आसीदत्र महामुनिश्च विजयानन्दाख्यसूरीश्वरः

श्रीलक्ष्मीविजयाह्वयश्च सुगुणस्तस्याजनि शिष्यकः ।

तच्छिष्यो मुनिरत्नहंसविजयश्चास्योपदेशेन च

ग्रन्थोऽयं लिखितो बभूव भविनां मोक्षाख्यशर्मौघदः ॥१॥

लहीया रामधन नागोरवाला ॥ संवत् १९७० ना असाडवद ३॥ ग्रन्थाग्रन्थम् ३४००॥ इदं पुस्तकं मुनीशश्रीहंसविजयोपदेशात् पालणपुरनिकटवर्त्तिग्रामवास्तव्येन श्राद्धवर्यरूपचन्द्रसुतलल्लुचन्द्रेण स्वपत्नीपर्सीश्रेयोर्थं न्यासभागाः पञ्च लिखापिताः ॥

[ 5885 ]

**आदिः**— प्रणम्य परमात्मानं श्रेयःशब्दानुशासनम्

आचार्यहेमचन्द्रेण स्मृत्वा किञ्चित् प्रकाश्यते ॥१॥

**अन्तः**— आसीद्वादिद्विरदपृतनापाटने पञ्चवक्त्र-

श्चान्द्रे गच्छे गुरुतरधिषणो धर्मसूरिर्मुनीन्द्रः ।

पट्टे तस्याजनि जनमनोऽनोकहानन्दकन्दः

सूरिः सम्यग्गुणगणनिधिः ख्यातिभाग् रत्नसिंहः ॥२॥

यस्यापरागसीमायामुदयः परभागभाक् ।

देवेन्द्रसूरिस्तत्पट्टे जज्ञे नव्यो नभोमणिः ॥३॥

इतश्च— निर्वीराधत(?) मुक्तिशास्त्ररचना जीवावधोत्सर्पणा
श्रीकौमारविहारमण्डितमही भूपप्रबोधिका ।
क्षीरोदोदधिमुद्रितेऽवनितले यस्योर्जिताः किल यः
सोऽभूतिर्थे(? त्तीर्थ)करानुकारिचरितः श्रीहेमचन्द्रो गुरुः ॥३॥

किं वा— भूपालमौलिमाणिक्यमालालिभ(?)शासनः ।
दर्शनषट्कनिस्तन्द्रो हेमचन्द्रो मुनीश्वरः ॥५॥
तेषामुदयचन्द्रोऽस्ति शिष्यः संख्यावतां वरः ।
यावज्जीवमभूद् यस्य व्याख्या ज्ञानामृतप्रपा ॥६॥
तस्योपदेशाद् देवेन्द्रसूरिशिष्यलवोऽद्भत् ।
न्याससारसमुद्धारं मनीषी कनकप्रभः ॥७॥

संवत् १९४९ आसोजसुद १२ । एमदावादमध्ये लइया ब्राह्मण रामकृष्णः ।

[ 5889 ]

अन्तः— लघुवृत्तौ षष्ठमपादावचूरिः समाप्ता ।

संवत् १५०४ वर्षे माघमासे शुक्लपक्षे एकादश्यायां तिथौ भोमवासरे रोहिणीनक्षत्रे शुभयोगे शुभकरणे अहिमदनगरवास्तव्ये पातसाहश्रीसुरताणमहिमदराज्ये कृते सति भ०श्रीसोमसुन्दरसूरितत्पट्टे भट्टारकश्रीमुनिसुन्दरसूरिः तत्पट्टे भट्टारकश्री-जइवंता वर्त्तई श्रीजयचन्द्रसूरिराज्ये कृते पंडा(न्या)सतिल[क]वीरगणियोग्यः श्रे०-राणाकस्य भार्या बा०वांनूं--सुतझांईआ--धीधा--भगिनी हरखूश्रेयोर्थं पञ्चमीउद्यापनार्थं पुस्तकानि पञ्च लिषितानि ॥ श्रे०डांईआलिषितं पं०तिलकवीरयोग्यम् । चेलाचन्द्रमण्डल-वाचनार्थम् ।

[ 5896 ]

अन्तः— इत्याख्यातप्रक्रिया सत्क्रियार्हा सिद्धिप्राप्ता श्रीगुरूणां प्रसादात् ।
प्रायोऽस्माकं पुण्यकृत्योद्यतानां सोऽयं शश्वद्दत्तहस्तावलम्बः ॥१॥
यो शिष्योऽद्भुतकीर्त्तिकीर्त्तिविजयः श्रीवाचकार्हमणेः
राजश्रीतनयो व्यधत्त विनयः श्रीतेजपालात्मजः ।
तस्यां शासितसाधुशब्दसरणौ स्वोपज्ञसत्प्रक्रिया-
वृत्तौ पूर्णतया व्यराजत गुणैर्वृत्तिर्द्वितीयाऽद्भुता ॥१॥
संवत् बाण-रस-सप्तेन्दु(१७६५)अश्विनधवलपक्षके ।
सप्तमीभृगुवारे च लेखिता पत्तने पुरे ॥२॥

[ 5898 ]

**अन्तः**— इति महोपाध्यायश्रीकीर्त्तिविजयगणिशिष्योपाध्याय—श्रीविनय-विजयगणिविरचितायां हैमलघुप्रक्रियायां तृतीयावृत्तिः संपूर्णा । संपूर्णा चेयं प्रक्रिया—

स्फूर्जद्रूपार्थनिधिहैमव्याकरणरत्नकोशस्य ।
अर्गलभिद्रचनेयं कनीयसी कुञ्चिकाऽऽद्रियताम् ॥१॥
श्रीहीरविजयसूरेः पट्टे श्रीविजयसेनसूरीशाः ।
तेषां पट्टे संप्रति विजयन्ते विजयदेवसूरीन्द्राः ॥२॥
श्रीविजयसिंहसूरिर्जीयाज्जयत्विति गुरौ गते ।
स्वर्गे श्रीविजयप्रभसूरिर्युवराजो राजतेऽधुना विजयी ॥३॥
खेन्दु-मुनीन्दु(१७१०)मितेऽब्दे विक्रमतो राजधन्यपुरनगरे ।
श्रीहीरविजयसूरेः प्रभावतो गुरुगुरोर्विपुलात् ॥४॥
श्रीकीर्त्तिविजयवाचकशिष्योपाध्यायविनयविजयेन ।
हैमव्याकरणस्य प्रथितेयं प्रक्रिया जीयात् ॥५॥ ग्रन्थाग्रन्थ २५०० ।

लिपीकृतं जोधपुरका विरामण—षोडा पुनमचन्दः । एमदावादमध्ये ।

[ 5899 ]

**अन्तः**— संवत् १७१० वर्षे चैत्रशुदि १५ बुधे लिखितम् ।

संवत् १७१९ वर्षे ज्येष्ठमासे कृष्णपक्षे नवमीदिने अर्कवासरे श्रीकोरटानगरे पं० श्रीराजकुशलग०—शि०मु०ऋद्धिकुशल पं०शान्तिविमलग०शि०मु० केशरविमलग० श्रीचतुरकुश[ल]—शि०मु०महिमाकुशलग०श्रीजसविजय—शि०मु०दीपविजयपं०श्रीराज-कुशलग०शि०मु०रामकुशलमुनीनां प्रथमप्रहरे पं०श्रीपुण्यरुचिगणिउपस्थापना कृता ।

कान्तिविजयाख्यगणिनः पठनकृते कृतधियः सतीर्थ्यस्य ।
विहितोऽयं यत्नः स्तात् सकलः सर्वोपकारेण ॥६॥
प्रत्यक्षरं गणनया ग्रन्थमानमिहोदितम् ।
अनुष्टु[ भां ] सहस्रे द्वे शतैः पञ्चत्रिरन्विते ॥७॥

[ 5907 ]

**आदिः**— अर्हन्तः सिद्धिदाः सिद्धाचार्योपाध्यायसाधवः ।
गुरुः श्रीसाधुराजश्च बुद्धिं विदधतां मम ॥१॥
श्रीहेमचन्द्रसूरीन्द्रः पाणिनिः शाकटायनः ।
श्रीभोजश्चन्द्रगोमी [च] जयन्त्यन्येऽपि शाब्दिकाः ॥२॥

श्रीसिद्धहेमचन्द्र[क]व्याकरणोदितैर्गणैः ।

ग्रन्थो गणविवेकाख्यः स्वान्यस्मृत्यै विधीयते ॥३॥

**अन्तः–** इति पण्डितमण्डलीमण्डनमौलिरत्नपं०नन्दिरत्नगणिगुम्फिते गणविवेक-ग्रन्थे २५।२६।२७।२८ पादगणसङ्ग्रहो नाम सप्तमोऽधिकारः ॥ ग्रन्थाग्रम् ६०७।

[ 5923 ]

**आदिः–** पण्डितोत्तंसपं०श्रीविजयविमलगणिगुरुभ्यो नमः ॥

प्रणम्य ध्वस्तविघ्नौघं वीरं वृत्तिर्लघीयसी ।

न्यायसङ्ग्रहनाम्नोऽस्य न्यायसूत्रस्य लिख्यते ॥१॥

इह हि प्रभुश्रीहेमचन्द्राचार्यसमुच्चितानां सप्तपञ्चाशतो ५७ महोपाध्याय-श्रीहेमहंसगणिसमुच्चितानां च चतुरशीते ८४ र्न्यायानां १४१ सङ्ग्रहरूपस्य महो-पाध्यायश्रीहेमहंसगणिविरचितस्य न्यायसंग्रहनाम्नो न्यायसूत्रस्य स्वस्मृत्यर्थं व्याख्या प्रयोजनोदाहरणमात्रं लिख्यते । ज्ञापकं १, यथायोग्यमनित्यता २, तज्ज्ञापकं चेत्ये-तानि ३ तु महोपाध्यायश्रीहेमहंसगणिभिरेव विरचिताभ्यामेतद्बृहद्वृत्ति-तन्न्यासाभ्यां ज्ञेयानि। तत्र सूत्रादौ मङ्गलार्थं नमस्कारः ॥

**वृ०अन्तः–** इति तपागच्छाधिराजभट्टारकपुरन्दरश्रीआनन्दविमलसूरिशिष्यपण्डि-तोत्तंसपं०श्रीविजयविमलगणिशिष्यानन्दविजयगणिसमुद्धृतायां न्यायसंग्रहाभिधानन्याय-सूत्रलघुवृत्तौ महोपाध्यायश्रीहेमहंसगणिसमुच्चितचतुरशीतिसङ्ख्यन्यायव्याख्या समाप्ति-मगमत् । तत्समाप्तौ च समाप्तेयं न्यायसंग्रहलघुवृत्तिः ।

श्रीमति तपाख्यगच्छे सश्रीआनन्दविमलसूरीन्द्राः ।

उत्तमसंयमवन्तोऽभूवन् भूवलयविख्याताः ॥१॥

तेषां शिष्या विदिता जयन्ति सम्प्रति च गौतमप्रतिमाः ।

श्रीविजयविमलविबुधास्तच्छिष्यानन्दविजयेन ॥२॥

श्रीविक्रमभूपालाद् वर्षे शर-वह्नि-रस-शशि(१६३५)प्रमिते ।

स्वस्मृत्यर्थं लघ्वी न्यायानामुद्धृता विवृतिः ॥३॥ विशेषकमिदम् ।

इति हैमव्याकरणस्थन्यायसंग्रहरूपश्रीन्यायसंग्रहाभिधानन्यायसूत्रलघुवृत्तिः समाप्ता ।

[ 5951 ]

**आदिः–** सानन्दं शतशो नत्वा शिवयोश्चरणद्वयम् ।

शब्दशोभां वयं कुर्मः शिशुव्युत्पत्तिसम्पदे ॥१॥

**अन्तः–** यद्यपि खलबहुलोर्वी न वृथाक्लेशास्तदप्येषः ।

तुष्यतु तदेव तेजो विलसति यस्य प्रसादोऽयम् ॥१॥

शुक्लजनार्दनपुत्रो वच्छाचार्यस्य दौहित्रः ।
अभ्यस्तशब्दशास्त्रो भट्टोजीदीक्षितछात्रः ॥
हीराभिधानयतिव्रतमहसि प्राप्तनिजजन्मा ।
कविनीलकण्ठशर्मा निर्मितिमेनां विनिर्ममे शैवः ॥३॥
त्रि-नव-षडेक(१६९३)मितेऽब्देऽतिक्रान्ते विक्रमादित्ये ।
शुचिदर्शे शिवपदयोर्निजकृतिरद्यापि नीलकण्ठेन ॥४॥
इति श्रीनीलकण्ठकविकल्पिता शब्दशोभा समाप्ता ।

संवत् १७०१ वर्षे शाके १५६६ प्रवर्त्तमाने माङ्गल्यप्रभासोत्तमाश्विनि मासे सितेतरपक्षे तिथिदशमीभौमवासरे श्रीबुरहानपुरमध्ये कृतचातुर्मासके श्रीपूर्णिमा-पक्षे लिखितं भ० विनयप्रभसूरिपठनार्थम् ।

[ 5954 ]

**अन्तः**— इत्यनुभूतिस्वरूपेण कृता सारस्वतप्रक्रिया समाप्ता ।

संवत् १९२८ श्रावण वदि ७ रवौ सढोराख्यपत्तने लिखिता श्रीमत्पूज्या-चार्यविमलचन्द्रजितः शिष्येण श्रीमद्विजयचन्द्रगणिना ।

सिद्धयक्षि-निधि-भूवर्षे सप्तम्यां श्रावणे रवौ ।
कृष्णे श्रीमद्विजयेन गणिना लिखिता वरा ॥१॥

[ 5960 ]

**अन्तः**— इति श्रीमत्परमहंसपरिव्राजकाचार्यानुभूतिस्वरूपाचार्यविरचितायां सार-स्वतीप्रक्रियायां तृतीया वृत्तिः सम्पूर्णा ।

अहं च भाष्यकारश्च कुशाग्रीयधियावुभौ ।
नैव शब्दाम्बुधेः पारं किमन्ये जडबुद्धयः ॥१॥
तरणितारकनाथधनञ्जया नयनतां दधते जगदीश्वराः ।
सकृदपि स्मरणादघसंक्षयो भवति यस्य स पातु नृकेसरी ॥२॥

श्रीश्वेतद्वीपपतिवासुदेवाय नमः । श्रीबुद्धदेवाय नमः । श्रीसहजानन्दस्वामिने नमः ॥ लखितं जगदीशानन्दना नारायण वांचज्यो ।

[ 5961 ]

**अन्तः**— संवत् १७२६ वर्षे आषाढवदि ८ दिने मुनि—उपस्थापना कृता पण्डितशान्तिविमलगणिनेति भद्रम् ।

[5969]

**अन्तः**— संवत् १६४० वर्षे शाके १५०५ प्रवर्त्तमाने पोषमासे श (सि)तेतरपक्षे पञ्चम्यां तिथौ ध्वजपतिवासरे श्रीथिरपु(प)द्रनगरमध्ये लिपीकृतं वणारीसमहिमासागरेण ।

[5974]

**अन्तः**— सुबोधिकायां क्लृप्तायां सूरिश्रीचन्द्रकीर्त्तिभिः ।
कृत्प्रत्ययानां व्याख्यानं बभूव सुमनोहरम् ॥१॥
तीर्थे वीरजिनेश्वरस्य विदिते श्रीकौटिकाख्ये गणे
श्रीमच्चान्द्रकुले वटोद्भवबृहद्गच्छे गरिम्नान्विते ।
श्रीमन्नागपुरीयकाह्वयतपाप्राप्तावदातेऽधुना
स्फूर्ज्जद्भूरिगुणान्विता गणधरश्रेणी सदा राजते ॥२॥
वर्षे वेद-मुनीन्द्र-शङ्कर(११७४)मिते श्रीदेवसूरिः प्रभुः
जज्ञेऽभूत् तदनु प्रसिद्धमहिमा पद्मप्रभः सूरिराट् ।
तत्पट्टे प्रथितः प्रसन्नशशिभृत् सूरिः सतामादिमः
सूरीन्द्रास्तदनन्तरं गुणसमुद्राह्वा बभूवुर्बुधाः ॥३॥
तत्पट्टे जयशेखराख्यसुगुरुः श्रीवज्रसेनस्तत-
स्तत्पट्टे गुरुहेमपूर्वतिलकः शुद्धक्रियोद्द्योतकः ।
तत्पट्टे प्रभुरत्नशेखरगुरुः सूरीश्वराणां वर-
स्तत्पट्टाम्बुधिपूर्णचन्द्रसदृशः श्रीपूर्णचन्द्रप्रभुः ॥४॥
तत्पट्टेऽजनि प्रेमहंससुगुरुः सर्वत्र जाग्रद्यशाः
आचार्या अपि रत्नसागरवरास्तत्पट्टपद्मार्यमा ।
श्रीमान् हेमसमुद्रसूरिरभवच्छ्रीहेमरत्नस्तत-
स्तत्पट्टे प्रभुसोमरत्नगुरवः सूरीश्वराः सद्गुणाः ॥५॥
तत्पट्टोदयशैलहेलिरमलश्रीजेसवालान्वया-
ऽलङ्कारः कलिकालदर्पदमनः श्रीराजरत्नप्रभुः ।
तत्पट्टे जितविश्ववादिनिवहा गच्छाधिपाः संप्रति
सूरिश्रीप्रभुचन्द्रकीर्तिगुरवो गाम्भीर्यधैर्याश्रयाः ॥६॥
तैरियं पद्मचन्द्राह्वोपाध्यायाभ्यर्थना कृता ।
शुभा सुबोधिकानाम्नी श्रीसारस्वतदीपिका ॥७॥
श्रीचन्द्रकीर्तिसूरीन्द्रपादाम्भोजमधुकरः ।
श्रीहर्षकीर्तिरिमां टीकां प्रथमादर्शकेऽलिखत् ॥८॥

अज्ञानध्वान्तविध्वंसविधाने दीपिकानिभा।
दीपिकेयं विजयतां वाच्यमाना बुधैश्चिरम् ॥९॥
स्वल्पस्य सिद्धस्य सुबोधकस्य सारस्वतव्याकरणस्य टीकाम्।
सुबोधिकाख्यां रचयाञ्चकार सूरीश्वरः श्रीप्रभुचन्द्रकीर्त्तिः ॥१०॥
[ गुण-पक्ष-कला(१६२३)संख्ये वर्षे विक्रमभूपतेः।
टीका सारस्वतस्येषा सुगमार्था विनिर्मिता ॥११॥ ]

इति श्रीमन्नागपुरीयतपागच्छाधिराजभट्टारकश्रीचन्द्रकीर्त्तिसूरिविरचिता श्रीसारस्वतव्याकरणस्य दीपिका समाप्ता ॥ अस्मिन् समाप्ते समाप्तोऽयमिति ग्रन्थः।

स्फुटं सप्तसहस्राणि शतपञ्चमनुष्टुभाम्।
सारस्वतस्य टीकायां ग्रन्थमानमिहोदितम् ॥

इति श्रीचन्द्रकीर्त्ति[टीका] समाप्ता ॥

वर्षे नन्द-भुजर्षि-चन्द्र(१७२९)प्रमिते मासे युजे सितगे(?)
वारे जीवयुते भपौष्णसहिते पूर्णेव पूर्णादिने।
ग्रामे श्रीमक्षुहकाख्यसुयशे श्रीसूरिराज्ये सदा
लिखितेयं(?) श्रीचन्द्रकीर्त्तिसुबुधा रङ्गोदयेन यथा ॥

[5978]

**आदिः**— राढावन्तं फणिपतिफणै राजमानं समन्ताद्
गीर्वाणेशैर्दनुजमहितं वन्द्यपादारविन्दम्।
नत्वा पार्श्वं गुरुमपि तथा मेघरत्नाभिधोऽहं
टीकां कुर्वे विमलमनसं भारतीप्रक्रियां ताम् ॥१॥

कुमतिकुमतदैत्यक्रोधदावाग्निमेघो जनवनजविकाशाऽहर्मणी रम्यमूर्त्तिः।
भवतु मयि विनीते विश्वविश्वप्रकाशी सजलजलददीप्तिः पार्श्वनाथः प्रसन्नः ॥२॥

यस्यादरात् पङ्किलमन्दप्रज्ञः प्राप्य प्रसादं वचसां निधिः स्यात्।
भूयान्महामोहहरा शिशूनां सा भारती वाचि मम प्रसन्ना ॥३॥

वन्दारुक्षितिपोत्तमाङ्गमणिभिः संघृष्टपादाम्बुजाः
शब्दाम्भोधिविवर्द्धनैकविधवो वैदग्ध्यवागीश्वराः।
यावच्छासनमेव जैनमतुलं स्याद्वादविद्यान्वितं
तावद्विश्वजने जयन्तविजयाद्याः श्रीधराः सुन्दराः ॥४॥

क्वासौ भारतीप्रक्रिया क्वाहं मन्दो जडाशयः।
तथापि धाष्ट्र्यमाधाय यथाप्रज्ञं प्रतन्यते ॥५॥

**अन्तः**– इति **बृहद्गच्छे** वाचकश्रीविनयसुन्दर–शिष्य**मेघरत्न**विरचितायां **सार-स्वतदीपिकायां** तद्धितार्थः । इति **स्यादिप्रक्रिया** सम्पूर्णा ।

संवत् १८८६ कार्त्तिकशुदि ८ बुधवासरे **पट्टीनगरे बिहारीऋषिणा** लिपीकृता ।

[5980]

**आदिः**– युक्तं प्रणव-मायाभ्यां वाग्बीजं स्मृतिमानये ।
जडोऽपि पारमभ्येति यस्माद्वाङ्मयवारिधेः ॥१॥
गुरुमात्मविदं पूज्यं ध्यायामि शिवसुन्दरम् ।
सदोपकारिणं वन्दे **भानुमेरुं** च सत्कविम् ॥२॥
अथ स्यादिविभक्तिस्थं सूत्राणां वार्त्तिकं कियत् ।
लिख्यते **रूपमालायां** शिष्यप्रार्थनया मया ॥३॥

**अन्तः**– श्रीमद्वृद्धतपोगणे गणपतिः श्री**देवभद्र**क्रमात्
सूरिश्री**धनरत्न**पङ्कजषडंह्रि**र्भानुमेरु**र्बुधः ।
तच्छिष्यो **नयसुन्दरः** समलिखत् **सारस्वते** कृद्गतं
सूत्राणां वरवार्त्तिकं शिशुकृते श्री**रूपरत्नस्रजि** ॥१॥

अथ प्रशस्तिः–श्री**वीरः** स वेदेवडित्र(?)भुवनजनतातन्तयस्तत्त्वमूर्ति-
श्चञ्चच्चामीकरत्विट् चरमजिनपतिर्भूरिभावादिभेत्ता ।
स्फूर्ज्जद्वैर्याब्धिमन्थाः सततममृतभुग्गीःपतिः शक्रपूज्यः
श्रीमान् शन्तातिरस्तु प्रशमरसकृपासिन्धुरर्थाभिगम्यः ॥१॥
तच्छिष्यः सूरिमुख्यः प्रथमगणधरो **गौतमो** गां प्रदद्यात्
सद्बोधिं रातु रङ्गत्त्रिदशपतिनतः पञ्चमः श्री**सुधर्म्मा** ।
ये चान्ये **जम्बु**मुख्याः श्रुतजलनिधयः शीललीलाप्रमीला-
स्ते मह्यं सिद्धिभाजः सकलगणधरा ज्ञानलक्ष्मीं दिशन्तु ॥२॥
ततः श्री**प्रभवस्वामी शय्यम्भवमुनीश्वरः** ।
**यशोभद्रस्तु सम्भूति-भद्रबाहु**गणाधिपौ ॥३॥
**स्थूलभद्रस्तु** तत्पट्टे **महागिरि-सुहस्तिनौ** ।
सूरी **सुस्थित-सुप्रतिबद्धौ** द्वौ गणधारिणौ ॥४॥
**इन्द्रदिन्नस्तु** तत्पट्टे **दिन्नः सीहगिरि**र्गुरुः ।
**वज्रस्वामी वज्रसेन**स्तत्पट्टे **चन्द्रसूरि**राट् ॥५॥
**सामन्तभद्रसूरि**श्च श्री**वृद्धो देवसूरि**राट् ।
सूरि**प्रद्योतन**स्तस्मा**न्मानदेव**गणीश्वरः ॥६॥

सूरिश्रीमानतुङ्गश्च वीरसूरिस्ततो गुरुः ।
जयदेवगुरुर्देवानन्दसूरिश्च विक्रमः ॥७॥
नरसिंहगुरुस्तस्माच्छ्रीसमुद्रगुरुस्ततः ।
पुनः श्रीमानदेवश्च सूरिश्रीविबुधप्रभः ॥८॥
जयानन्दगुरुस्तस्माद् रविप्रभगणीश्वरः ।
यशोदेवगुरुः ख्यातस्ततः प्रद्युम्नसूरिराट् ॥९॥
पुनः श्रीमानदेवश्च विमलेन्दुमुनीश्वरः ।
सूरिरुद्‌द्योतनश्चासीत् सर्वदेवस्ततो गुरुः ॥१०॥
देवसूरिस्ततः सर्वदेवसूरिर्द्वितीयकः ।
सूरयो भूरयोऽभूवन्नेवं चान्द्रकुलेऽमले ॥११॥
सूरिर्धनेश्वरस्तत्र नग्नान् प्रतिबोधकृत् ।
प्रतिष्ठामकरोच्चैत्रपुरे वीरजिनेशितुः ॥१२॥
ततश्चैत्र इति स्वच्छगच्छः ख्यातः क्षमातले ।
चक्रुस्तत्रोदयं पूज्याः सूरयो भुवनेन्दवः ॥१३॥
तेषां विनेयाः सद्ध्येयाः देवभद्रगुरूत्तमाः ।
कलौ सुविहिताग्रण्यः सत्क्रियोद्धारकारकाः ॥१४॥
यावज्जीवं तपः षष्ठाचामाम्लाभिग्रहग्रहाः ।
तपा इत्युल्लसत्कीर्ति लेभिरे लब्धिखानयः ॥१५॥
तेषां शिष्यास्त्रयस्तत्राद्या जगच्चन्द्रसूरयः ।
पूर्णचन्द्र इवोद्‌द्योतकारकाः काश्यपितले ॥१६॥
द्वितीयीकास्तु देवेन्द्रसूरयः श्रुतसागराः ।
तार्तीयीका गुणैस्त्वाद्याः सूरयोऽतिजयेन्दवः ॥१७॥
बृहत्तपा इत्यभिख्यां प्राप्ता राद्धान्तपारगाः ।
[वस्तुपाल]महामात्यहृदयाम्भोजभानवः ॥१८॥
तच्छिष्यः सुरवृक्षोऽभूद्विनेयार्थप्रदानतः ।
राद्धान्तवारां पारस्य पारगः पूज्यपूजितः ॥१९॥
क्षेमकीर्त्तिर्गुरुर्मत्या विनेयीकृतवाक्पतिः ।
बृहत्कल्पं सदा प्रोक्तश्चक्रे टीकां सुविस्तराम् ॥२०॥
तत्पट्टाम्बरमार्त्तण्डश्चण्डः कर्म्मारिभेदने ।
हेमकुम्भगुरुः ख्यातो हेमकुम्भ इवोज्ज्वलः ॥२१॥

ततो रत्नाकरः सूरिर्ज्ञानरत्नमहोदधिः ।
यतो रत्नाकराभिख्यां लेभे वृद्धतपागणः ॥२२॥
शेखरः सर्वसूरीणामभूत् त्रिमुनिशेखरः ।
ततः श्रीधर्मदेवोऽस्तु धर्मदेव इवापरः ॥२३॥
तत्पट्टेऽभयसिंहाख्यसूरिस्त्वभयदानभाक् ।
यस्याद्यापि तपःश्लोको माति नो जगतीतले ॥२४॥
ततोऽतिशयसंपूर्णो जयात्तिलकसूरिराट् ।
येन सर्वत्र संप्राप्तं जयश्रीतिलकं क्षितौ ॥२५॥
तत्पट्टे सूरयः शश्वद्रत्नसिंहा दिदीपिरे ।
सङ्घः स्वेष्टप्रदानेन यैर्लब्ध्या गौतमायितम् ॥२६॥
जायते स्माऽहम्मदावादाधिपः शाहिरहम्मदः ।
तं प्रबोध्य महीपीठे चक्रिरे शासनोन्नतिम् ॥२७॥
सूरिर्भूरिगुणाधारस्तत्पट्टोदयवल्लभः ।
सागराः श्रुतवारीणां ततः श्रीज्ञानसागराः ॥२८॥
तत्पट्टपूर्वदिग्भानुरुदयात् सागरो गुरुः ।
लब्धिभाजस्ततोऽभूवन् गुरवो लब्धिसागराः ॥२९॥
सूरिश्रीधनरत्नाह्वस्तेषां पट्टेष्वदीदिपत् ।
प्रज्ञाजितमरुत्सूरिः सूरिव्रातनतक्रमः ॥३०॥
सूरिस्त्वमरत्नाह्वः पट्टपूर्वाचलांशुमान् ।
तत्सतीर्थ्यः स्फुरत्कीर्त्तिः तेजोरत्नः स सूरिराट् ॥३१॥
सूरिश्रीदेवरत्नाह्वो गुणाम(णिष्व)त्र गुणाधिपः ।
ततो धियां निधिर्देवसुन्दरः सुन्दराकृतिः ॥३२॥
साम्प्रतं विजयश्रीयुक् सूरिर्विजयसुन्दरः ।
सर्वे मयि कृपाभाजो भवन्तु भुवि विश्रुताः ॥३४॥
धनरत्नगुरोः शिष्या दक्षाः शश्वज्जिनोक्तिषु ।
रत्नत्रयधराः पूज्या भानुमेरुगणीश्वराः ॥३३॥
यैर्मादृशोऽपि मूर्खः सकृपैरकृषत दुरन्तभवकूपात् ।
तेषां मुमुक्षुमुख्याः शिष्या माणिक्यरत्नाह्वाः ॥३५॥
पाठकपदप्रवीणाः शास्त्रकदम्बेष्वधीतिनस्तेषाम् ।
अनुजेनेयं टीका रूपादिमरत्नमालाह्वा ॥३६॥

प्रथिता नयसुन्दर इति नाम्ना वाचकवरेण च तस्याम् ।
सारस्वतस्थितानां सूत्राणां वार्त्तिकं त्वलिखत् ॥३७॥
श्रीसिद्धहेम-पाणिनिसम्मतिमाधाय सार्थका लिखिताः ।
ये साधवः प्रयोगास्ते शिशुहितहेतवे सन्तु ॥३८॥
चलमनसापि भ्रान्त्या लिखितं न्यूनाधिकं च तं दृष्ट्वा ।
हास्यो नाहं सद्भिः संशोध्येयं कृपावद्भिः ॥३९॥
गुहवक्त्र-हयर्ष्विन्दु(१७७६)प्रमितेऽब्दे शुक्लतिथिराकायाम् ।
सद्रूपरत्नमाला समर्थिता शुद्धपुष्यार्के ॥४०॥

इति श्रीरूपरत्नमाला नयसुन्दरी सारस्वतव्याकरणटीका समाप्ता । पण्डित-चक्रचूडामणिपं०श्री४श्रीजयरत्नगणिशिष्यमुनिराजरत्नेन स्वाध्ययनायेयं टीका लिखिता ।

[ 5981 )

**आदिः—** कल्याणं यः प्रदत्तात् प्रमदजलधरप्रत्यवायव्यपायः
हेतुस्सेतुर्भवाब्धेः प्रभवदुरुत[र]ज्ञानशर्म्मैकमूर्त्तिः ।
रागद्वेषादिदोषव्यतिकररहितः सद्भितः श्रीनिवासः
पुण्यः कारुण्यराशिर्विमलगुणनिधिर्विश्वभृन्नाभिजन्मा ॥१॥
विप्रतिपत्तिविपत्तिध्वान्तव्रातप्रघातपटुर्नेष्टम् ।
दुरितारातिविमर्द्दि तेजः सारस्वतं जयतात् ॥२॥
अनवद्यहृद्यपद्यैरद्य विदध्मः प्रदीपिकां टीकाम् ।
सारस्वतसूत्राणां संश[य]तिमिरव्यपोहाय ॥३॥
आदौ मध्ये विरामे च मङ्गलाचरणं बुधैः ।
शिष्टाचारत्वतः कार्यं शास्त्राणां विघ्नसंहृते ॥४॥
यद्यमङ्गलमेव स्याच्छिष्टाचारोपमर्दनम् ।
मङ्गलं नाम तन्त्राणां नोररीक्रियते कुतः ॥५॥
निष्प्रत्यूहा समाप्तिर्मे शास्त्रस्य भवतादरः ।
इति कामनया शास्त्रकारो मङ्गलमग्रहीत् ॥६॥
मङ्गलायति मङ्गं च लाति तन्मङ्गलं मतम् ।
तत्कार्यं विघ्नशान्तेः स्यादसाधारणकारणम् ॥७॥
मङ्गशब्दोऽयमुद्दिष्टः पुण्यार्थस्याभिधायकः ।
तल्लातीत्युच्यते सद्भिर्मङ्गलं मङ्गलार्थिभिः ॥८॥

तदुक्तम्– मङ्गलं पापमिति प्रोक्तमुपचारसमाश्रयात् ।
तद्विदां लयतीत्युक्तं मङ्गलं पण्डितैर्जैनैः ॥९॥

अन्तः– येनाराजि महामहोभिरभितः श्रीमूलसङ्घाम्बरे
कर्त्रीति प्रबलान्धकारनिकरव्यापादनं कुर्वताम् ।
शान्तीभूतविरोधबोधदहनस्तद्धर्मकीर्त्तेर्मुनेः
पट्टारामनिषिञ्चनैकजलदः श्रीशीलभूषो बभौ ॥१॥
यः श्रीमद्गुरुशीलभूषणपदक्षीराम्बुधिं वर्द्धयन्
विश्वासासुलसद्यशःकरभरं तन्वन्नतन्वा धृतिः ।
सन्तोपालिमया करोति जगतां चेतःस्थितं मोहजं
जीयाच्छ्रीवरबोधभूषणविधुगीरच्छाच्छप्रभुः ॥२॥
राजद्राजविराजमानचरणश्रीधर्मसद्भूषण-
स्तत्पट्टोदयभूधरद्युमणिना श्रीमद्यशोनन्दिना ।
व्याख्याने निरवद्यपद्यनिभृते सारस्वतस्योदिते
वैषी तत्र समासिताप्रकथनं सत्स्यादिवृत्तेरिदम् ॥३॥
इति श्रीसारस्वतस्य यशोनन्दिनीटीका समाप्ता ॥

संवत् १६९५ वर्षे चैत्रशुदि ४ दिने शनिवासरे परमभट्टारकपुरन्दरप्रभुजगद्गुरु-श्री५श्रीविजयदेवसूरीश्वरस्तत्शिष्यमुनिनयविजयलिखितं पठनार्थं गणिविनीतविजय[स्य] ।

[ 5982 ]

आदिः– श्रीमद्वागीश्वरीवक्त्राद् मूलसूत्रमवाप्य हि ।
कृतं सारस्वतं येन ततोऽनुभूतये नमः ॥१॥
अ इ उ ऋ ऌ समानाः सूत्रमष्टाक्षरं परम् ।
ह्रस्व-दीर्घ-प्लुतभेदाः सवर्णा हि परस्परम् ॥२॥

अन्तः– अनेनानुक्रमेणैवापठीत् सूत्रं सरस्वती ।
ततः परमृजुश्चक्रे श्रीमद्भिरनुभूतिभिः ॥२२॥
विद्वच्चिन्तामणिग्रन्थं कण्ठपाठे पठन्ति ये ।
तेषां वक्त्रे नरीनर्ति सर्वदा [हि] सरस्वती ॥२३॥
श्रीविधिपक्षगच्छेशाः सूरिकल्याणसागराः ।
तेषां शिष्यैर्वराचार्य्यैः सूरिविनयसागरैः ॥२४॥
सारस्वतस्य सूत्राणां पद्यबन्धैर्विनिर्मितः ।
विद्वच्चिन्तामणिग्रन्थः कण्ठपाठस्य हेतवे ॥२५॥

पुष्पदन्तौ महीगङ्गा यावन्मेरुर्महार्णवः ।

तावन्नन्दत्वयं ग्रन्थो गीःसूत्रामृतमध्यराट् ॥२६॥

सारस्वतस्य वक्तव्यान्युदाहरणसंयुतैः ।

विनेयगसाराचार्य्यैरलेखिषत सत्वरम् ॥२७॥

इति श्रीविद्वच्चिन्तामणिग्रन्थः सम्पूर्णः । संवत् १८३७ वर्षे चैत्रवदि १२ दिने लिखितं मुनिजिनलाभेन श्रीभुजपुरे ॥

[ 5985 ]

**अन्तः**– सरस्वत्या प्रणिता प्रक्रिया समाप्तेत्यर्थः ।

श्रीजनार्दनिवत्सराजतनयः श्रीकान्हनामा सुतं
या श्रीनायकदेविकापि सुधियं प्राजीजनन्माधवम् ।

तस्य व्याकरणार्णवैकतरणेः सारस्वतीयोत्तम-
व्याख्या विष्णुमुदेऽस्तु सा विरतिमैत् सिद्धान्तरत्नावली ॥१॥

यत्सूचितं सूत्रकृता वचाद्यैर्विभज्य योगं च मया तु मूलम् ।

व्याख्यातमेतत् सुधियां सुखाय व्युत्पत्तयो स्तोकधियामपीह ॥२॥

टीकान्तरे भूयसि सत्यपीयं सारस्वते स्यात् सुमनोमनोहर्रा ।

नानाविधे सत्यपि मिष्टवस्तुन्यहो ! सतामिष्टतमा सितेव ॥३॥

एतद् यथामति मयाऽल्पधिया तु मूलं व्याख्यायि विस्तरभयादिह किञ्चिदल्पम् ।

तत् साधु चेत् साधुभिरभ्यधीभिर्दूष्यं ननूक्तमिति पापकरी ह्यसूया ॥४॥

इति श्रीभट्टमाधवविरचिता सिद्धान्तरत्नावली नाम सारस्वतस्य टीका समाप्ता ।

[ 5987 ]

**अन्तः**– क्षेमेन्द्रसूरिर्हरिभट्टसूनुः सारस्वते टिप्पनमभ्यधत्त० ।

इति नरेन्द्रायीयसारस्वते क्षेमेन्द्रकृतं टिप्पनकं समाप्तम् । संवत् १७२३ वर्षे मार्गशीर्षसुदि २ दिने गणिजिनविजयो लेखयांचक्रे श्रीकुवडानगरे ।

[ 5989 ]

**आदिः**– गोपिकावल्लभं नत्वा गिरं भट्टोजिदीक्षितम् ।

वाक्सूत्रे विदधे व्याख्यां फणिभाषितमार्गगाम् ॥१॥

**अन्तः**–यद्वेदं सूत्रं नारम्भणीयं वृन्दभेदाः समैर्वर्गा इति लोकत एव वर्गसंज्ञाया सिद्धत्वात् वर्णानां समत्वं स्थानप्रपन्नाभ्यां ग्राह्यम् ।

हाटकेशपुरस्थायी विनायकसुतोऽकरोत् ।

रघुनाथाभिधो व्याख्यां संज्ञापादस्य नागरः ॥

विहिता बहुभिर्वृद्धैष्टीकाः सन्ति सहस्रशः ।
लघुभाष्याभिधा त्वेषा तनुतो विदुषां मुदम् ॥

[ 5995 ]

**अन्तः—** इति श्रीमदनुभूतिस्वरूपाचार्यविरचिता **सारस्वतीप्रक्रिया** सम्पूर्णा ॥३॥
शब्दशास्त्रमनधीत्य यः पुमान् वक्तुमिच्छति वचः सभान्तरे ।
हस्तिनं कमलनालतन्तुना बद्धुमिच्छति वने मदोद्धतम् ॥१॥ इति वचनात् ॥
संवत् १८८० वर्षे शाके १७४५ प्रवर्त्तमाने कातीमासे शुक्लपक्षे पूर्णिमा-तिथौ भोमवासरे लिखितं सकलपण्डितप्रवरपण्डितश्री ५ **मोहनविजयग०** तत्शिष्य-प्रवरपण्डितश्री५**राजेन्द्रविजयग०** तत्शिष्यप्रवरपं०श्री५**गुलालविजयग०** तत्शिष्य-पं०श्रीपं०**मुक्तिविजे(जय)ग०** लि० तत्शिष्यमु०अमीविजे(जय)—**माणेकचन्द**पठनार्थम् ।

[ 5996 ]

**अन्तः—**मिती फागुण सुद १२ संवत् १८७३ । **जेसलमेर**मधे(ध्ये) लिष(खि)तं पं० भ० **दुलीचन्द खरतरगच्छे** श्री**जिनचन्द्रसूरि**भिः ।
आतमध्याने **आगरौ** भारी **विकानेर** ।
सोर गणौ **गुजरात**मै निन्द्या **जैस[ल]मेर** ॥१॥

[ 5997 ]

**अन्तः—** कृतौ सुवृत्तौ हरिदेवभूमीदिवौकसः प्रीतिकृते बुधानाम् ।
ससार **सारस्वतसार**मिश्र एषोऽधिकारो वसतिं सुसारः ॥१॥
तुरङ्गमाङ्गर्षि-मृगाङ्क वर्षे (१७६७) सदूर्ज्जमासे च वलक्षपक्षे ।
तिथौ दशम्यां च सितान्वितायामकारि **सारस्वतसारवृत्तिः** ॥२॥
इति **सारस्वतसारः** सम्पूर्णः ।
रसान्तरिक्ष-द्विप-भू-युतेऽब्दे(१८०६) सदाश्विने मासि वलक्षपक्षे ।
तिथौ चतुर्थ्यां मुनि**भोजन**नाम्ना व्यलेखि **सारस्वतसार** एषः ॥१॥
श्री**बेजवाडा**नगरे शं भूयात् सतामित्यलम् ॥

[ 5998 ]

**आदिः—** पण्डितश्रीवृद्धिसागरगणिगुरुभ्यो नमः ॥
नत्वा जिनेन्द्रं स्वगुरुत्वभक्त्या तत्सत्प्रसादात् सुसिद्धिशक्त्या ।
तत्संप्रदा[ना]दवचूर्णिमेतां लिखामि **सारस्वतसूत्र**युक्त्या ॥१॥
प्रायः प्रयोगा दुर्ज्ञेया किल **कातन्त्रविभ्रमे** ।
येषु मोमुह्यते श्रेष्ठः शाब्दिकोऽपि यथा जडः ॥२॥

कातन्त्रसूत्रविसरः किल साम्प्रतं य-
न्नास्ति प्रसिद्ध इह त्वस्ति स्वरो गरीयान् ।
स्वस्येतरस्य च सुबोधविवर्धनार्थ-
मित्थं ममात्र सफलो लिखनप्रयासः ।

**अन्तः**— इति कातन्त्रावचूर्णिः पूर्णा । संवत् १७१३ वर्षे पण्डितश्रीवृद्धिसागर गणि-शिष्यग०हीरसागरग०पुन्यसागरपठनार्थम् ।

[ 5999 ]

**अन्तः**— लि०हंसरत्नमुनिना । सतां श्रेयः सन्ततयः समुल्लसन्तुतराम् ।
बाणाश्वषडिन्दुमिते ( १६७५ ) संवति धवक्कपुरवरे समीहे ।
श्रीखरतरगणपुरक्करसुदिवापुष्टप्रकाराणाम् (?) ॥१॥
श्रीजिनमाणिक्याभिधः सूरीणां सकलसार्वभौमानाम् ।
पट्टे वरे विजयिषु श्रीमज्जिनचन्द्रराजेषु ॥२॥

गीतिः— वाचकमतिभद्रगणेः शिष्यस्तदुपास्त्यवाप्तपरमार्थः ।
चारित्रसिंहसाधुः व्यधादवचूर्णिमिह सुगमाम् ॥३॥
यल्लिखितं मतिमान्द्यादनृतं प्रश्नोत्तरेऽत्र किञ्चिदपि ।
तत्सम्यक् प्राज्ञवरैः शोध्यं स्वपरोपकाराय ॥४॥

इति कातन्त्रविभ्रमावचूर्णिः संपूर्णा लि०हंसरत्नेन संवत् १८६० वर्षे ज्येष्ठवदि ५ रवौ श्रीराजनगरमध्ये ।

[ 6000 ]

**अन्तः**— श्रीमत्खारतराह्वगच्छपजिताश्चन्द्रस्य सूरेः पदे
भान्ति श्रीजिनहर्षसूरिगुरवोऽमीषां दयारत्नवित् ।
शिष्यस्तस्य कृतौ कृतेऽनुसुधियां सन्नायरत्नावली-
नाम्न्या बाहुमितागमद् गुरुतरः पूर्णः प्रकाशप्रमः ॥१॥

इति श्रीखरतरगच्छपश्रीजिनहर्षसूरिशिष्यवाचकदयारत्नविरचितायां न्यायरत्नावलीनाम्न्यां न्यायवृत्तिः । संवत् १७३७ शाके १६०२ मार्गशीर्षवदि ११ सोमे श्रीमोढज्ञातीयमहितेतिआख्येन भट्टवृन्दावनेन लिखितम् ।

[6003]

**आदिः**— नत्वा सार्वपदद्वन्द्वं ध्यात्वा सारस्वतं महः ।
सारस्वतक्रियाव्यूहं वक्ष्ये शैक्षस्मृतिप्रदम् ॥१॥

अन्तः– सारस्वतक्रियारूपमाला श्रीपद्मसुन्दरैः ।
संदृब्धाऽलङ्करोत्वेषा सुधियां कण्ठकन्दली ॥२॥
इति सारस्वतरूपमाला संपूर्णा । संवत् १७४० वर्षमार्गशिरसुदि १ शुक्रेऽलेखि ।

[ 6008 ]

अन्तः– श्रीमन्नागपुरीयाह्वतपोगणकजारुणाः ।
श्रीचन्द्रकीर्त्तिसूरीन्द्राश्चन्द्रवच्छुभ्रकीर्तयः ॥१३॥
तच्छिष्या हर्षकीर्त्याह्वसूरयो व्यदधुः स्फुटम् ।
धातुपाठमिमं रम्यं सारस्वतमतानुगम् ॥१४॥
खण्डेलवालसद्वंशे हेमसिंहाभिधः सुधीः ।
तस्याभ्यर्थनया ह्येषा निर्मिता नन्दताच्चिरम् ॥१५॥
इति श्लोकत्रयं सुगमम् ।

वृ०अन्तः– नवरं खण्डेलसद्वंशे इति खण्डेलवालज्ञातौ वाकलीवालगोत्रे टुङ्कनगरे सावलापार्श्वनाथप्रसादकारकनेमिदास-पुत्रसाहश्रीजइता–तत्पुत्रसाह जहा–तस्यात्मज-साहहेमसिंहाभ्यर्थनया आग्रहेणायं धातुपाठः कृतः स च चिरं नन्दतात् समृद्धिमान् भवतु विस्तारं प्राप्नोत्वित्यर्थः ॥

निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः ।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥१॥
संख्याने सर्वधातूनामेतेषामेकसंख्यया ।
अष्टादशशतान्येकनवत्युत्तरतां( १८९१ ) ययुः ॥२॥
कविकल्पद्रुमे तु इति स्फीतः सप्तदशशत्या षट्कोनषष्ट्या (१७५४) ।
धातुस्कन्धो बुधैः सेव्यः कविकल्पद्रुमः फलम् ॥३॥
अन्यच्च– द्वात्रिंदधिकधातुद्विसहस्री( २०३२ )पत्रपूरितः ।
श्रयतां कविकल्पतरुर्भूयादेकादशपल्लवः ॥४॥
फलदं सपादलक्षं चेत् ग्रन्थमानं विधीयते ।
तदा स्यात् सर्वसाधूनां सर्वरूपनिरूपणम् ॥५॥
चेतस्यैवं विचार्यैव ग्रन्थविस्तरभीतितः ।
व्युत्पत्तिमात्रसिद्ध्यर्थं दिग्मात्रं दर्शितं मया ॥६॥
गच्छे यत्र पवित्रितावनितले हम्मीरदेवार्च्चितः
सूरिः श्रीजयशेखरः [ सुचरितः ] श्रीशेखरः सद्गुणः ।

रूणायां पुरि सीहडस्य वचनाद्दल्लावदीभूभुजा

सद्वासः फुरमानदानमहितः श्रीवज्रसेनो [ गुरुः ] ॥१॥

[ सूरिश्रीप्रभुरत्नशेखरगुरुविद्यानिधिर्ये मुदा

सत्क्षोमैः किल पर्यधापयदरं पेरोजसाहिप्रभुः । ]

श्रीमत्साहिसिकन्दरस्य पुरतो जातः प्रतापाधिको

ढिल्यां नागपुरीयपाठकवरः श्रीहंसकीर्त्याह्वयः ॥२॥

आनन्दं जनयन् सदा मुनिजनेष्वानन्दरायः स्म भूत्

प्रादाद् यस्य चिराय रायपदवीं श्रीमान् हुमाऊन्नृपः ।

श्रीमत्साहिसलेमभूमिपतिना संमानितः सादरं

सूरिः सर्वकलिन्दिकाकलितधीः श्रीचन्द्रकीर्त्तिप्रभुः ॥३॥

साहेः संसदि पद्मसुन्दरगणिर्जित्वा महापण्डितं

क्षौमग्रामसुखासनाद्यकबरश्रीसाहितो लब्धवान् ।

हिन्दूकाधिपमालदेवनृपतेर्मान्यो वदान्योऽधिकं

श्रीमज्जोधपुरे सुरेप्सितवचाः पद्माह्वयः पाठकः ॥४॥

तद्गच्छामलमण्डनं सुविहितं श्रीचन्द्रकीर्त्तिप्रभोः

शिष्यः सूरिवरः स्फुरद्द्युतिभरः श्रीहर्षकीर्त्तिः सुधीः ।

तेनेयं रचितात्मनिर्मितशुभश्रीधातुपाठस्य स-

द्वृत्तिः स्फूर्त्तिमियर्तु यावदुदितः श्रीपुष्पदन्ताविमौ ॥५॥

धातुपाठस्य टीकेयं नाम्ना धातुतरङ्गिणी ।

प्रक्षालयतु विज्ञानामज्ञानमलमान्तरम् ॥६॥

शुद्धबोधजलागाधामिमां धातुतरङ्गिणीम् ।

अवगाह्य बुधाः सम्यक् कुर्वतां निर्मलां मतिम् ॥७॥

इति श्रीमन्नागपुरीयतपागच्छाधिपभट्टारकश्रीहर्षकीर्त्तिसूरिविरचितं स्वोपज्ञधातु-पाठविवरणं संपूर्णम् ।

[ 6009 ]

**अन्तः**— इति श्रीमन्नाग[पु]रीयतपागच्छाधिपभट्टारकश्रीहर्षकीर्त्तिसूरिविरचितं स्वपोज्ञधातुपाठविवरणं संपूर्णं समाप्तेयं धातुतरङ्गिणी संपूर्णा ।

संवत् १७९५ प्रमिते अणहिल्लपुरपत्तने ढंढेरपाटके श्रीपूर्णिमापक्षे प्रधानशाखायां भट्टारकश्रीश्री५श्रीभावप्रभसूरीश्वरचरणसरोजरोलम्बायमान—शिष्याणुभाणरत्नेन पुस्तक-मिदं पूरितं लिखतेन संपूर्णं जातम् ।

[ 6015 ]

**अन्त**— संवत् १५३८ वर्षे फाल्गुनमासे शुक्लपक्षे द्वितीया रवौ वासरे श्रीजेसलमेरुदुर्गे श्रीदेवकर्ण्णराज्ये श्रीखरतरगच्छे श्रीजिनेश्वरसूरिसंताने श्रीजिनशेखरसूरिपट्टे श्रीजिनधर्म्मसूरिपट्टालंकारश्रीजिनचन्द्रसूरिशिष्यो देवभद्रमुनिरलिखत् ॥

[6021 ]

**अन्तः**— श्रीसरस्वतीपत्तने श्रीनृपविक्रमादित्यराज्ये संवत् १४७८ द्वादश्यां सोमवासरे श्रीखरतरगच्छे श्रीजिनेश्वरसूरिसंताने श्रीजिनशेखरसूरयः तेषामाचार्यश्रीकीर्तिसागरसूरयः तेषां शिष्येण धर्म्मशेखरेण स्वपठनार्थं उपसर्गवृत्तिरेषा विलेखयामास, ब्राह्मणपुरुषोत्तमेन लिखनविशारदेन लिखिता ।

[6033]

**आदिः**— नत्वा श्रीभारतीं देवीं दिव्याभरणभूषिताम् ।
केषाञ्चिदपि द्दद्यानां धातूनामुपयोगिनाम् ॥१॥
विनेयविनयामानमनःप्रमदमेदुराः ।
क्रियाकलापं कुर्वन्ति श्रीजिनदेवसूरयः ॥२॥ युग्मम् ।

**अन्तः**— श्रीभावडारगच्छीयश्रीजिनदेवसूरिभिः ।
प्रोक्ते क्रियाकलापेऽत्र चुराद्या धातवोऽभवन् ॥२॥
भ्वादीनामिह धातूनां नास्ति धातुगणक्रमः ।
यो यथा स्मृतिमायातः स साधुः साधितस्तथा ॥३॥
नत्वादादि—चुरान्तानामुक्तानामेष विद्यते ।
न चिन्त्यं किञ्चिदप्यूनं कार्यं कार्येण भवद्भिः (भाव्यते) ॥४॥
ये त्वत्र धातवो नोक्ता ग्रन्थविस्तारभीरुभिः ।
ते सर्वे स्वयमेवोह्याः सुधीभिः साध्यसिद्धये ॥५॥
श्रीभावदे[व]सुगुरोरभिधाप्रसिद्धगच्छैकभूषणमणिर्मुनिमाननीयः ।
सूरीश्वरः शमिवरश्चतुरः क्रियाणां कलापकं व्यरचयज्जिनदेवसूरिः ॥६॥
यावत् श्रीवीतरागस्य धर्मो जयति भूतले ।
विद्वद्भिर्वाच्यमानोऽयं ग्रन्थस्तावद्भि नन्दतु ॥७॥

संवत् १५२० वर्षे माघसुदि ५ शुक्रे श्रीमदणहिलपुरपत्तने श्रीप्रधानशाखायां श्रीपूर्णिमापक्षे श्रीजयप्रभसूरिणा स्वयं हस्तेन शिष्यमु० पूर्णकलशपठनार्थं त्यादिक्रियाकलापकं लिखितमस्ति ।

[ 6054 ]

**अन्तः**– एवं लघुनोपायेन सर्वशब्दा प्रतिपत्तौ च शास्त्रस्योपयोगो बोध्य इति शिवम् ।

अधीत्य फणिभाष्याब्धिसुधीन्द्रहरिदीक्षितात् ।
न्यायतन्त्रं रामरामाद् वादिरक्षोघ्ररामत ॥१॥
याचकानां कल्पतरोरहिकक्षहुताशनात् ।
शृङ्गबेरपुराधीशरामतो लब्धजीविकः ॥२॥
वैयाकरणनागेशः स्फोटायनऋषेर्मतम् ।
परिष्कृत्योक्तवांस्तेन प्रीयतामुमया शिवः ॥३॥
दृढस्तर्केऽस्य नाभ्यास इति चिन्त्यं न पण्डितैः ।
दृषदोऽपि हि सन्तीरां(तरन्ति) गां पयोधौ रामयोगतः ॥४॥

इति श्रीमदुपाध्यायोपनामकसतीगर्भजशिवभट्ट-सुतनागेशकृतौ वैयाकरणसिद्धान्त-मञ्जूषाख्यः स्फोटवादः। श्रीसंवत् १९१५ फाल्गुनशुक्ल ११ भौमवासरे लिखितं बलदेवजी उपाध्याय गुजराती चातुर्वेदी मोढ दण्डपानसंनिधौ ॥

[ 6063 ]

**आदिः**– ॐ नमः परमज्योतिःशालिने परमात्मने ।
त्रिजगत्पूजिताय श्रीपार्श्वनाथाय योगिने ॥१॥
वर्द्धमानजिनः सिद्ध्यै वर्द्धमानसदोदयः ।
स्तात् सिद्धार्थधराधीशवंशाकाशदिवाकरः ॥२॥
शारदा वरदा दद्याद् विद्यादानं कजानना ।
कर्पूरपूरपूर्णेन्दुकुन्दा जैत्रयशोभरा ॥३॥
श्रीमत्तपागच्छस्वच्छसुरशैलसुरद्रुमम् ।
सर्वाभीष्टार्थसंसिद्धिनिर्विघ्नवरवेधसम् ॥४॥
स्मृत्वा श्रीविजयानन्दगुरुं गुरुगुणैर्गुरुम् ।
स्वोपज्ञचारुशब्दार्थचन्द्रिकोद्धार उच्यते ॥५॥ युग्मम् ॥

**अन्तः**– इति श्रीसारस्वतद्वितीयपदस्य साधनिका प्रारम्भपद्धतिः ॥ इति श्रीमत्तपागच्छाधिराजश्रीगौतमगणधरोपमगुणसमाजसकलभट्टारकवृन्दवृन्दारकराजभट्टारकश्री-१९ श्रीविजयानन्दसूरीश्वरशिष्यभुजिष्य पं० हंसविजयगणिसमर्थिते स्वोपज्ञशब्दार्थचन्द्रि-कोद्धारे षड्विधव्याख्यानात्मकः श्रीसारस्वतशब्दानुशासने द्वितीयः वृत्तार्थलेशः संपूर्णः।

श्रीतपगणगगनाङ्गणगगनमणेर्भूरिसूरिमौलिमणेः ।
निजकीर्त्तिकुसुमपरिमलवासितविश्वत्रितयभूमेः ॥१॥

श्रीजिनप्रवचनकाञ्चनचञ्चद्रुचिरनव्यकषदृषदः ।
शान्तसुधारससागरशारदवरविशदहिमरश्मेः ॥२॥
श्रीविजयानन्दगुरोः शिष्यभुजिष्येण हंसविजयेन ।
शिशुबोधार्थं विहितः सुयुक्तियुक्तोऽयमुद्धारः ॥३॥ त्रिभिर्विशेषकम् ।
निधि-नयन-नग-निशाकरप्रमिते (१८२९) वर्षे माघसितषष्ठ्याम् ।
श्रीसूर्यपुरे समभूत् संपूर्णोऽयं गरिष्ठार्थः ॥४॥
दुर्वादिकरिटिकोटीघटाकुम्भपाटने सिंहैः ।
श्रीविनयविजयवाचकचरणैः संशोधितश्चायम् ॥५॥
धीरविजयेन शिशुना प्रथमादर्शे च परमया भक्त्या ।
अयमुद्धारो लिखित; सम्यग्बुद्धिप्रबोधाय ॥६॥
यावत् तिष्ठति धरणीधरः यावन्नक्षत्रमण्डितो मेरुः ।
तावत् तिष्ठतु विश्वे विचक्षणैर्वाच्यमानोऽयम् ॥७॥

इति श्रीशब्दार्थचन्द्रिकोद्धारः संपूर्णः । लिखितश्चायं मुनिकेसरचन्द्रेण । संवत् १७६० वर्षे मार्गशीर्षासितसप्तम्यामिति मङ्गलम् । श्रीसूर्यपुरबिंदिरे ।

[ 6077 ]

**अन्तः**— इति श्रीमलधारिशिष्यपण्डितनरचन्द्रविरचिते प्राकृतप्रबोधे चतुर्थः पादः ।

नानाविधैर्विधुरितां विबुधैः स्वबुद्ध्या
तां रूपसिद्धिमखिलामवलोक्य शिष्यैः ।
अभ्यर्थितो मुनिरनुज्झितसम्प्रदाय-
मारम्भमेनमकरोन्नरचन्द्रनामा ॥

ग्रन्थाग्रम् श्लोक १५५० ॥ संवत् १४७६ वर्षे अश्विनवदि १३ शनौ अद्येह श्रीमृगुमण्डलकरणे लिखिता ॥

[ 6084 ]

**अन्तः**— संवत् १६६९ वर्षे श्रीस्थंभतीर्थवास्तव्यवृद्धशाखायां प्राग्वाटज्ञातीय-पा० सिवजी उभयकुलविसुद्धा भार्या लबाईपुत्रदेवकारणदेवराज-वेणीदास-तुलसीदास-तन्मध्ये ज्येष्ठपुत्रपा० देवकरणेन ज्ञानवृद्ध्यर्थं इदं पुस्तकं लिखापितम् ॥

[ 6085 ]

**आदिः**—नमः श्रीहीरविजयसूरीश्वरशिष्यश्रीजयवन्तर्षिगणिचरणपङ्कजेभ्यो नमो नमः ॥

यस्य क्रमनमस्कारः सारसौख्यविधायकः ।
स श्रीविश्वविभुर्जीयात् तमांसि नितमां मम ॥१॥

सिद्धहेमाष्टमाध्याये प्रोक्तं प्राकृतलक्षणम् ।
क्रियते ढुण्ढिका तस्य नाम्ना व्युत्पत्तिदीपिका ॥२॥

अन्तः— इति वृद्धतपागच्छे श्रीसौभाग्यसागरसूरिशिष्येण श्रीहर्षकुलपण्डितवचः-प्राप्तं प्रयोगरहस्येन उदयसौभाग्यगणिना लिखितायां हैमप्राकृतढुण्ढिकायां व्युत्पत्ति-दीपिकाभिधानायां सर्वप्रयोगविशेषव्युत्पत्तिप्रकाशायां चतुर्थः पादः समर्थितः ।

श्रीमद्गुरुतपागच्छप्राज्यसाम्राज्यकारकाः ।
अभूवन् भुवनख्याताः लब्धिसागरसूरयः ॥१॥
तत्पट्टप्रकटाम्भोजे भजते राजहंसताम् ।
विजयन्तेऽधुना तेऽमी धनरत्नगुरूत्तमाः ॥२॥
श्रीलब्धिसागराचार्याः परिचर्यानुभावतः ।
प्राप्तोदयाः श्रीसौभाग्यसागराः सन्ति सूरयः ॥३॥
श्रीमल्लयुतपागच्छे विपश्चिन्मौलिमण्डनम् ।
श्रीहर्षकुलनामानः पण्डिता गुणमण्डिताः ॥४॥
तत्पार्श्वेऽध्यैष्ट सकलं हैमप्राकृतलक्षणम् ।
सर्वप्रयोगव्युत्पत्तिरहस्यं लब्धवांश्च यः ॥५॥
सोऽहं सौभाग्यपाथोधिसुगुरुक्रमसेवया ।
सुधीरुदयसौभाग्यः प्राकृतढुण्ढिकामिमाम् ॥६॥
विश्वजातरिपुव्रातध्वान्तध्वंसनभास्करे ।
पार्वणेन्दुलसत्कीर्त्तिधवलीकृतभूतले ॥७॥
प्राणमत् प्रौढपृथ्वीशकोटिरद्योतितक्रमे ।
बहादरसुरत्राणे राज्यं पालयति क्षितौ ॥८॥ युग्मम् ।
श्रीस्तम्भतीर्थनगरे भूम्यङ्कतिथि (१५९१) सम्मिते ।
वर्षे हर्षेण विहितो ग्रन्थोऽयं जयताच्चिरम् ॥९॥
ग्रन्थोऽयं नन्दतात् तावत् समग्रधरणीतले ।
सूर्याचन्द्रमसौ यावद् यावन्मेरुमहीधरः ॥१०॥
अज्ञानादथवा किञ्चिदनाभोगतयाऽथवा ।
यत् किञ्चिल्लिखितं शास्त्रोत्तीर्णैस्तच्छोध्यतां बुधाः ॥११॥ ग्रन्थाग्रम् १०४००।

[ 6092 ]

आदिः— श्रीसूर्याय नमो विधाय विधिवत् सद्ध्याय चित्तं रवौ
दिव्यानाममिव पारसीकवचसां कुर्वे प्रकाशं नवम् ।

सम्राट्शाहजलालदीन्द्रसदसि प्रज्ञाप्रमोदप्रदं
बाह्यध्वान्तमिवापहं तु पठतां पूषान्तरस्थं तमः ॥१॥
यद् ब्रह्मवेदेन विकारहीनं प्रगीयते स्म प्रकृतेः परस्तात् ।
तदेष गोब्राह्मणपालनार्थं महीमहेन्द्रोऽकबरः प्रयातः ॥२॥
यदस्य नामाखिलशास्त्रसागरं स्मृतीतिहासादिषु साधु विश्रुतम् ।
गतं त्रिलोकीषु चिरस्थितिं ततस्तदाख्यया तन्त्रमिदं वितन्यते ॥३॥
यद्गोपालसुतेन कृष्णविभुना गावस्तथा पालिता
रामैर्भूसुरदेवतैर्द्विजवरास्त्राता न चित्रं च तत् ।
गोविप्राभिभवप्रिये यवनजे वंशेऽवतीर्णो विभु-
र्गो-विप्रान् प्रतिपालनादकबरो विष्णुर्विचित्रं महत् ॥४॥
कियतां पारसीकनां वचसां संग्रहो मया ।
विधीयते स्वबोधार्थं संस्कृतार्थावबोधनैः ॥५॥
येऽवगाहितुमिच्छन्ति पारसीवाङ्मयार्णवम् ।
तेषामर्थे कृष्णदासो निबध्नाति वचःप्लवम् ॥६॥
अपठित्वा तु तच्छास्त्रं श्रुत्वैवैमं करोम्यहम् ।
न्यूनातिरिक्ततामत्र क्षन्तुमर्हन्तु तद्विदः ॥७॥
श्रीसूर्य उक्त आपत्ताबस्तस्मिंल्लाभोऽपि कथ्यते ।
नैयरे अर्यमा चापि तवको भुवनेषु च ॥८॥

**अन्तः**— इत्यादि पारसीकभाषायां यथादर्शनं प्रत्ययागमादेशः वर्णविकार-नाशविपर्ययविभाषाविधयःसन्धिशब्दाऽव्यय-कारक-समास-तद्धिताख्यात-कृत्सु यथाकामं कल्पनीयाः । इति महीमहेन्द्रश्रीअकबरशाहकारिते विहारीकृष्णदासमिश्रविरचिते पारसीकप्रकाशे कृत्प्रकरणं समाप्ति[ता]मगात् ।

संवत् १९२६ श्रावणशुदिपूर्णिमायां रविवासरे लिखितं १०८ श्रीमत्पूज्याचार्य्यश्रीविमलचन्द्रस्वामिजितः शिष्येण श्रीमत्पूज्याचार्यश्रीरामचन्द्रस्वामिजितो लघुगुरुभ्रात्रा गणिना श्रीविनयचन्द्रेण किराणानगरे चतुर्मासस्थितेन ।

[ 6095 ]

**आदिः**— नत्वा श्रीभुवनेश्वरीं हरि-हरौ लम्बोदरं च द्विजान्
श्रीमत्शाहजहांमहेन्द्रपरमप्रीतिप्रसादाप्तये ।
ब्रूते संस्कृतपारसीकरचनाभेदप्रदं कौतुकं
ज्योतिःशास्त्रविदोपयोगि सरलं वेदाङ्गरायः सुधीः ॥१॥

[ 6098 ]

**अन्तः**– संवद्धृति-मुनि-चन्द्र(१७१८) वर्षे माधवमासे कृष्णेतरपक्षे चतुर्थी-तिथौ कविवारे श्रीषोडाख्ये विद्वद्वीरचन्द्रः लिवि(पी)चक्रे ।

[ अन्यहस्तेन लिखितमिदम्– )

पं०श्रीकपूरविजय पं०कस्तूरसत्कशिशुमु०लक्ष्मीविजय तिणरी परत छे। रुपीये १॥ देस्या ज्यारे परत त्रावीओ १॥ जातौ २ वाली ६ कर्मग्रन्थ १ नां[म]माला ।

[ 6099 ]

**अन्तः**– श्रीहेमीनाममालासूत्रं समाप्तम् ॥

संवत् १६६१ वर्षे वैशाखवदि ८ दिने भौमे श्रीआगमगच्छे धन्धूकपक्षे उपाध्यायश्रीमुनिराज–तच्छिष्य मु०वत्सराजः तच्छिष्यउदयराजवाचनार्थं श्रीमहिसाणा-नगरे लिखिता । श्रीखरतरगच्छे वा०श्रीपद्मसुन्दरगणिशिष्यभवनसोमगणिनाऽलेखि चिरं नन्द्यात् । पं०शक्तिरङ्गगणिस्तच्छिष्यपं०जयमल्लशोधिता । बादरदृष्टया पुष्टया० ।

[ 6100 ]

**अन्तः**– संवद्गुण-समीराश्व-मेदिनी( १७९३ )मितवत्सरे ।
तिथौ प्रौष्ठाद्यैकादश्यां वारे शक्रपुरोहिते ॥१॥
श्रीजिनराजसूरीणां विनेया वाचकोत्तमाः ।
श्रीमन्तो मानविजयास्तेषां शिष्या बुधोत्तमाः ॥२॥
वाचकाः कमलहर्षा गुणमाणिक्यरोहणाः ।
विद्याविलाससन्नाम्ना तेषां पत्पद्मनेमुषा ॥३॥
लिखिता नाममालायाः प्रतिः पठनहेतवे ।
कृत्वा कृपामणुशिष्योऽतनोत्तमयोरियम् (?) ॥४॥
यत्नेन रक्षणीया या सदासुश्लथबन्धनात् ।

[ 6101 ]

**अन्तः**– इत्याचार्यश्रीहेमचन्द्रविरचितायामभिधानचिन्तामणा नाममालायां सामान्यकाण्डः षष्ठः सम्पूर्णः । सर्वग्रन्थाग्रम् १५९१ अक्षर १३ ।

संवत् १६७४ वर्षे वैशाखशुदि पांचमी रवौ लषितं तपागच्छाधिराजश्री-५श्रीहेमसोमसूरि–शिष्य आचार्यश्रीविमलसोमसूरिशिष्य-विशालसोममुनिपठनार्थं. महो-पाध्यायश्रीआणन्दप्रमोदगणि-शिष्यपं०श्रीसकलप्रमोदगणि-शिष्यपं०तेजःप्रमोदगणिगुरु-भ्रातृपद्मप्रमोदगणि[ना] लिखितम् । गणिश्रीसौभाग्यसोमपठनार्थम् । श्रेयांसि भवन्तु लेखक-पाठकयोः ।

[6122]

**अंतः—** सर्वाङ्गीणकलाविलासनिलयः कल्पद्रुमाभः कलौ
जायत्सर्वजनीनमञ्जुमहिमो मित्रप्रतापोदयः ।
श्रीमच्छ्रीविधिपक्षगच्छगणभृद्भूभृन्नतांह्रिद्वयः
श्रीकल्याणसमुद्रसूरिसुगुरुः सूरीन्द्रचूडामणिः ॥१॥
तन्निर्देशविधायवाचकवरश्रेणीकिरीटोपमा
भास्वत्साधुगुणोपशालि........ ।

[6124]

**वृ०अन्तः—** एतच्छास्त्रपठनात् सज्ज्ञानं स्फुरतु भूस्पृशाम् ।
सुधियां बुद्धिस्फूर्तिविधात्री प्रसीदताच्छारदादेवी ॥१९॥
संवत् नन्द-सागर-रस-चन्द्रे ( १६७९ ) लिखिता मया ।

[6125]

**वृ०अन्तः—** श्रीमदर्हन्तमानम्य संवित्सम्पद्विधायिनम् ।
श्रीहेमचन्द्रसंदृब्धनामकोषप्रबोधनम् ॥१॥
स्वकीयज्ञानसिद्धयर्थं श्रीश्रीवल्लभवाचकः ।
सारोद्धारमिमं नाम्नां तनुते नामनिर्णयात् ॥२॥ युग्मम् ।

**वृ०अन्तः—** इति श्रीज्ञानविमलोपाध्याय-शिष्यवाचनाचार्यश्रीवल्लभगणिविरचिते श्रीहैमाभिधानचिन्तामणिनाममालानामसारोद्धारे षष्ठः सामन्यकाण्डनामसारोद्धारः समाप्तः, तत्समाप्तोऽयं श्रीमदभिधानचिन्तामणिनाममालानाम सारोद्धारः ॥

श्रीवीरशासनसमुद्रत आविरासीत् प्रोद्यत्कलाभिरभितः प्रथितः पृथिव्याम् ।
स्फूर्जन्महःप्रसरनाशिततामसौघः श्रीचन्द्रगच्छ इति चन्द्र इवोदितश्रीः ॥१॥
तत्रासीद् विबुधाग्रणीर्गणगुरुश्रीवर्द्धमानान्तिषत्
सूरीन्द्रः स जिनेश्वरो दशशताशीत्या ( १०८० ) मिते संवति ।
जित्वा श्रीअणहिल्लपत्तनपुरे दुर्वादिनो दुर्लभ-
क्ष्मापाऽऽस्याद् बिरुदं वरं खरतरेत्याख्यायकं प्राप्तवान् ॥२॥
तत्पट्टेऽभयदेवसूरिरभवद्रङ्गन्नवाङ्गीमहा-
वृत्ति-स्तम्भनपार्श्वनाथभगवन्मूर्तिप्रकाशैककृत् ।
तच्छिष्यो जिनवल्लभाभिधगुरुः क्रूरक्रियाकृद् बभौ
सम्यक्पिण्डविशुद्धिशास्त्रविलसत्कर्मादिशास्त्रैककृत् ॥३॥

एवं सूरिपरम्परागत इह श्रेष्ठे गणे दीप्यते
स श्रीमज्जिनचन्द्रसूरिसुगुरुश्चारित्रपावित्र्यभृत् ।
तेजःश्रीमदकब्बराभिधनृपः श्रीपातिसाहिर्मुदा-
ऽवादीद् यं सुयुगप्रधान इति सन्नाम्ना यथार्थेन वै ॥४॥
श्रीमन्त्रीश्वरकर्म्मचन्द्रविहितो यत्कोटिटङ्कव्ययः
श्रीनन्द्युत्सवपूर्वकं युगवरो यस्मै ददौ स्वं पदम् ।
श्रीमल्लाभपुरे दयादृढमतिश्रीपातिसाह्याग्रहा-
न्नन्द्याच्छ्रीजिनसिंहसूरिसुगुरुः स स्फीततेजोयशाः ॥५॥
सुरखरतराह्वस्य गच्छस्येश्वरयोः [सदा]।
धर्मसम्बन्धिसाम्राज्ये विजयिन्यतदद्भुतौजसि ॥६॥
तथा योधपुरद्रङ्गे सूरिः सिंहनरेशितुः ।
राज्ञश्च वत्सरे सप्त-षष्टि-षट्-चन्द्र( १६६७ )सम्मिते ॥७॥
पूर्वं श्रीजिनराजसूरिसुगुरोः शिष्याग्रणीः शास्त्रकृ-
ज्जज्ञे श्रीजयसागरो भुवि ततः श्रीरत्नचन्द्रोऽभवत् ।
दीप्तोऽतोऽजनि भक्तिलाभसुगुरुश्चारित्रसारस्तत-
श्चत्वारः क्रमतो बभुर्वरमहोपाध्यायमिश्रा अमी ॥८॥
श्रीमच्चारित्रसाराणां पाठकानां गुणौकसाम् ।
शिष्योऽभूद् वाचनाचार्यभानुमेरुः प्रतापवान् ॥९॥
देदीप्यन्तेऽधुना तस्य शिष्यमुख्या विचक्षणाः ।
ज्ञानविमलनामानः पाठका गुरवो मम ॥१०॥
तच्छिष्यो वाचनाचार्यो वादिश्रीवल्लभोऽदधत् ।
श्रीहैमनाममालाया नाम्नां सारोद्धृतिं शुभाम् ॥११॥
हैमव्याकरणोणादि-पाणिनीयादिकं भृशम् ।
दृष्ट्वोऽत्रोद्यमश्चक्रे नामकोशाश्च भूयसः ॥१२॥
तथापि वितथं यत् स्यात् तदुत्सार्यं विशारदैः ।
उपकारपराः सन्तो यतो दोषापकारकाः ॥१३॥
एधतां धीमतां नृणां पठतां च विपश्चिताम् ।
प्रसादादर्हतां शश्वज्ज्ञानं च श्रोऽवर्सीयसम् ॥१४॥
आचन्द्रार्कमयं नाम्ना सारोद्धारविशारदैः ।
वाच्यमानः सदा भूमौ नन्दतान्नन्दयत्वदः ॥१५॥

प्रत्यक्षरं गणनया ग्रन्थाद् ग्रन्थविधायकः ।
ग्रथमानमिह ग्रन्थेऽष्टौ सहस्राणि पण्डिताः ॥१६॥
सहस्रद्वितयं सूत्रग्रन्थमानं कृतं बुधैः ।
प्रतिनामाङ्कसङ्ख्याया लिखनान्नात्र संशयः ॥१७॥
सूत्रवृत्त्याः सहस्राणि दश सन्त्युभयोरपि ।
ग्रन्थमानमिदं ज्ञेयं सर्वमेवं विचक्षणैः ॥१८॥
एतच्छास्त्रं पठतां सज्ज्ञानं स्फुरद् भूस्पृशां सुधियाम् ।
बुद्धिस्फूर्त्तिविधात्री प्रसीदताच्छारदादेवी ॥१९॥

श्रीतिमिरिपुरपार्श्वनाथप्रसादात् । संव [ त् ] १६८९ वर्षे प्रथमवैशाखवदिषष्ठीदिने गुरुवारे लिखिता पं० चारि[त्र]कीर्त्तिगणिना प्रतिरियम् ।

( पश्चात्कालीनोल्लेखः— )

नाममालाकी परत चन्द्रकीर्ति साटै ऋषि जैतसीनइ दीधी छइ सही २।

[6144 ]

**आदिः**— शब्दब्रह्म यदेकं यच्चैतन्यं च सर्वभूतानाम् ।
यत्परिणामस्त्रिभुवनमखिलमिदं जयति सा वाणी ॥१॥
इयममरदत्त-वररुचि-भागुरि-गोपालितादिशास्त्रेभ्यः ।
अभिधानरत्नमाला कविकण्ठविभूषणार्थमुद्ग्रीयते ।

[6145 ]

**अन्तः**— संवत् १५५२ वर्षे पौषसुदि २ शुक्रे पूर्वाषाढानक्षत्रे शुभनाम्नि योगे श्रीगैणोलीपत्तने राजाधिराज अरिमानमर्द्दनराजश्रीवाचादेवराज्यप्रवर्त्तमाने जोइसी त्रिपुरारिपठनार्थं इदं अमरकोष(श)पुस्तकं लिखाप्य(पि)तम् । लिखितं ज्योतिश्रीलाला-सुपुत्रा लिखितमिति ॥

[ 6151]

**आदिः**— या संस्मृता प्राणभृतां क्षणेन संसाधयेदिष्टसमस्तसिद्धिम् ।
विश्वस्य सृष्टि-स्थिति-नाशहेतुः सा भारती यच्छतु वाञ्छितं वः ॥१॥
कवीन्द्रकुमुदानन्दकन्दोद्गमसुधाकरः ।
विरच्यते चतुःकाण्डचा एषोऽनेकार्थसंग्रहः ॥२॥

**अन्तः**— इत्यनेकार्थतिलके एकाक्षरसञ्ज्ञः प्रथमकाण्डः ।

[ 6178 ]

**आदिः**— प्रणम्य सुधियां नाथं देवदेवं रमापतिम् ।
एकाक्षरनाममालां कुर्वे चेतः प्रसादनम् ॥१॥

अन्तः— इत्येषा रचिता मालाक्षरी सौभरिणा शुभा ।
य: पठेच्छृणुयाच्चेमां स शब्दार्णवपारगः ॥१११॥
यां चकार महदाशः सौभरिर्ज्ञानतोयधिः ।
अङ्गिरास्तत आश्रुत्य तां चकार त्रिलोकगाम् ॥११२॥
इति श्रीसकलविद्यानिधिना श्रीसौभरिणा मुनीश्वरेण विरचिताऽऽद्यक्षरनाममाला समाप्ता ।

[6185]

आदिः— नत्वा शङ्करपादपद्मयुगलं ज्ञानाय हेतोः सखे !
नानाग्रन्थविलोकिता पुनरहं ज्ञात्वा मया लिख्यते ।
श्रीदामोदरजागरूकवसुधा तस्यात्मजो व्यासराट्
तेनायं वितनोदभूत् सवये (?)श्रीकालिदासाभिधः ॥१॥
शब्दाब्धेरथ चन्द्रोऽभूत् स प्रकाशकरैर्नृणाम् ।
नानार्थकौमुदीं कुर्वे हृद्ध्वान्तध्वंसनाय वै ॥२॥
अन्तः— प्रह्लादपुरसम्भूतो दामोदरोऽभवत् पुरा ।
ग्रन्थकर्त्ताऽभवत् तस्मात् कालिदासाभिधः कविः ॥१९॥
इत्येकाक्षरीमातृकारीत्या नाममाला सम्पूर्णा। प्रत्यन्तरात् शोध्या विचक्षणैरिति मङ्गलं समाप्तम् ॥

[ 6186 ]

अन्तः— एकाक्षरेषु शब्देषु तदूह्यं लक्ष्यवेदिभिः ।
इति जगदुपकारिण्याभिरूगपदण्डाधिनाथरचितायाम् ॥
एकाक्षरकाण्डोऽयं सम्पूर्णः नानार्थरत्नमालायाम् ॥

इति एकाक्षरी नाममाला सम्पूर्णा । संवत् १९०१ अब्दे पोष वदि ५ घस्रे मुनिकनकरत्नेनाऽलेखि ।

[6202]

अन्तः— नमः श्रीजगदीशाय नमो वाण्यै निरन्तरम् ।
नमो मे गुरवे भूयान्नमो विप्रकुलाय च ॥१॥
सुरविटपीव फली सन् श्रीमत्कायस्थमाथुरो वंशः ।
चिरवारीयनामा [?यो] भेदः ख्यातस्तदीयोऽस्ति ॥२॥
गोपाचले माननरेन्द्रपार्श्वदेवापि येनाद्यचतुर्द्धरत्वम् ।
श्रीघाटमोऽभूत् स्पृहणीयकीर्तिः परोपकारैक[? सु]बद्धचेताः ॥३॥

तदङ्गजः श्रीहरिदासनामा बभूव भाग्योदयचण्डभानुः।
त्रयोऽभवन् तत्तनया गुणाढ्याः परोपकारप्रथिता जगत्याम् ॥४॥
पर्शुरामस्तदाद्योऽभूद् द्वितीयश्चतुराभिधः।
नरेन्द्रचन्द्र इत्याख्यस्तृतीयः सोदरोऽभवत् ॥५॥
पर्शुरामेण सम्प्राप्तं श्रीमत्साहिसिकन्दरात्।
साम्राज्यं यवनपुरे सदा दानैकवृत्तिना ॥६॥
स्वर्णयज्ञोपवीतादि ब्राह्मणेभ्यो ह्यनेकशः।
पवित्रात्मा महादानं पर्शुरामो ददौ सुधीः ॥७॥
नरेन्द्रचन्द्रेण जगद्धितेन भागीरथीलक्षकजैः पुपूजे।
परोपकारव्रतिनाऽनघेन श्रीकृष्णपादाम्बुजसेवकेन ॥८॥
नरेन्द्रचन्द्रस्य च धर्म्मपत्नी महासती श्रीपहवाभिधाना।
असूत पुत्रं गढमल्लसञ्ज्ञं मणिं यथारोहणभूध्रभूमिः ॥९॥
विपुलरुचिरकीर्त्तिः स्फारकन्दर्पमूर्त्तिर्विशदसुकृतपूर्त्तिः स्फूर्त्तियुक्तो बभूव।
गढमल्लनरनाथो विष्णुपादाब्जहंसः प्रवरगुणसमुद्रः स्वीयवंशावतंसः ॥१०॥
तद्धर्म्मपत्नी सुषुवे सुतान् वरान् श्रीप्यारमाख्या गुणरत्नखानिः।
यस्याः सुशीलांशतुलां न चान्या कान्ता समाप्नोदखिलावनीतले ॥११॥
नरहरिदासः प्रथमः परमानन्दो द्वितीयको विद्वान्।
तृतीयो मनोहराद्यो दासाग्रो गुणिजनाभीष्टः ॥१२॥
जयति जगति जाग्रत्कल्पवृक्षावदातः पटुतरगुणपात्रो वैबुधाधारभूतः।
सुकृतवशनिरीक्ष्यः सर्वदैकस्वरूपः परमपदसुपूर्वानन्दनामा नरेन्द्रः ॥१३॥
अरिकुमुदसमूहं मुद्रयन् हर्षयन् वै द्विजकुलजलजं संराजतां राजमान्यः।
परमपदसुपूर्वो यत्र शब्दो बभूवाऽधिकतरपरकान्त्यानन्दसूर्यः स सार्थः ॥१४॥
अन्येषामुपकाराय स्वीयबोधाय च स्फुटम्।
नाममालाममूं चक्रे परमानन्दठक्कुरः ॥१५॥
परमानन्दस्य सुतो विजयी मकरन्ददासनामाऽस्ति।
इन्द्रस्येव जयन्तः सर्वजनानामभीष्टगुणः ॥१६॥
यावद्गोविन्दनामानि धामानि च दिवौकसाम्।
तावच्छ्रीपरमाणन्दीनाममाला प्रवर्त्तताम् ॥१७॥
वसु-भुवनर्त्तु-निशामणि(१६४८)वर्षे हर्षेण फाल्गुने मासि।
प्रतिपदि शुक्रे वारे पूर्णेयं पुण्यवेलायाम् ॥१८॥

१ २ ३ ४ ५ ६ ७
श्रीसिंहे च कपौ शुके हरि-हरे स्कन्दे च संक्रन्दने
८ ९ १० ११ १२ १३ १४ १५
चन्द्रे भेक-बिडाल-वाजि-वहने वंशे यमे पारदे ।
१६ १७ १८ १९ २० २१
नागे वर्ण-समीरणे च दहने चामीकरे भार्गवे
२२ २३ २४ २५ २६
मार्त्तण्डेऽशनि-पन्नगेश्वरदिने खड्गे हरिः कीर्त्तितः ॥१९॥

१ २ ३ ४ ५ ६ ७
अजे चन्द्र-मराल-चातक-पिके भेके मरुद्वाहने
८ ९ १० ११ १२ १३ १४ १५
भृङ्गे दन्तिनि वानरे कच-कुचे दीपे करे वायसे ।
१६ १७ १८ १९ २० २१ २२
रात्रौ खञ्जन कज्जले मृगहृदे कामे च वीणा घने
२३ २४ २५ २६ २७ २८
सर्प्पैर्ङ्गाङ्ख-शरे यमी क्षितिजले सारङ्गशब्दा अमी ॥

वीणावारणवाजिसिंहहरिणानङ्गप्रवालाचला-
श्चन्द्रश्चातकचञ्चरीकजलमुद्वापासिवज्राहयः।
केकाकोकिलकेकिकीरगरुडस्वर्णानिलार्कास्तमो-
गुञ्जाश्रीफलपद्मदीपखटिकाः सारङ्गशब्दा इमे ॥२१॥

अर्कमर्कटमण्डूकविष्णुवासववायवः ।
सारङ्गसिंहशीतांशुयमाश्च हरयो दश ॥२२॥

'करकृतमपराधं क्षन्तुमर्हन्ति सन्तः' इति कोविदैर्विचार्यम् ॥ लिखितेयं पं० शुभङ्करेण स्वार्थम् ।

[6205]

**आदिः–** श्रीधन्वन्तरये नमः । अथ निघण्टशास्त्रं लिख्यते ।
बीजं श्रुतीनां सुधनं मुनीनां जीवं जडानां महदादिकानाम् ।
आग्नेयमस्त्रं भवपातकानां किञ्चिन्महः श्यामलमाश्रयामि ॥१॥

**अन्तः–** यो राज्ञां मुखतिलकः कथारमल्लस्तेन श्रीमदननृपेण निर्मितेऽत्र ।
ग्रन्थोऽभून्मदनविनोदनाम्नि पूर्णो वर्गोऽयं गुणगणमिश्रमिश्रकोऽयम् ॥
इति श्रीमदनपालविरचिते मद[न]विनोदनिघण्टौ मिश्रकवर्गः त्रयोदशः ॥१३॥

टाकान्वये महति भूमिभुजां विशुद्धे
काष्ठेति नाम नगरं जगति प्रसिद्धम् ।
यद्वेधसा विहितमादरतः स्वसृष्टे-
रुत्कृष्टताशयनपुञ्जदिदृक्षयेव ॥५१॥
तत्र श्रीरत्नपालः समजनि जनतानन्दवृन्दैककन्द-
कुन्देन्दुस्वच्छकीर्त्तिः परमददलनो दानदीक्षैकदक्षः ।
यस्याकर्ण्य प्रभूतं प्रथितगुणगणं कर्णसाफल्यभाजो
दैवं निन्दन्ति लोका नयनविफलताखेदमावेदयन्तः ॥५२॥
जननयनसुधांशुस्तस्य शुद्धस्तनूजो
जगति भरहपालः क्षोणिपालो बभूव ।
सकलसकलवाञ्छासिद्धहेतोर्विधाता
सुरतरुमिह चक्रे यत्करच्छद्मनेव ॥५३॥
हरिश्चन्द्रस्तस्मात् समजनि जनानन्दजननो
हरिश्चन्द्रो लोकेऽपर इव परीतापदलनः ।
परं विश्वामित्रेष्वहितमयमाधत्त मतिमान्
वसिष्ठो नैतस्माज्जगति महितोऽन्यः सुकृतिनः ॥५४॥
तस्मा[द]भूदद्भुतमन्यमानः साधारणो भूमिपतिर्वदान्यः ।
दारिद्र्यमुन्मूल्य पुनः सुवैरिष्वस्थायि कामं कृपयेव येन ॥५५॥
कामं सर्वमहेशमान्य उदयो नास्तं प्रयातः क्वचि-
न्नो दानं मधुपप्रियं जनमनःसंतापनुच्छूरता (?) ।
सच्चक्रातिविचित्रमित्रसुखिता वृद्धिप्रदा चन्द्रता
चातुर्येण महेन्द्रता कविमता किं किं न यस्याद्भुतम् ॥५६॥
अजनि सहजपालस्तस्य पूर्वस्तनुजः सकलगुणनिधानं शास्त्रधर्मैकवेत्ता ।
प्रथितपुरुषरत्नं यं समालोक्य लोका बहुविधिषु विधातुः कान्ततां मन्वते स्म ॥५७॥
किं वर्ण्यते श्रीसहजेन्द्ररूपं लोकाक्षिनीलोत्पलपूर्णचन्द्रम् ।
सदा रतिः श्रीमदनोऽपि यस्य सहोदरत्वेऽपि कनिष्ठ एव ॥५८॥
जयति मदनपालः सर्वविद्याविशालः सुजनपिकरसालस्तुष्टगोपालबालः ।
रुचिरतरचरित्रश्चारुचातुर्यचित्रः कृतसरसिजमित्रः कर्मधर्मे पवित्रः॥५९॥
सदा यदीया गुण[र]त्नमाला कण्ठेष्वतीवात्र सतां लुठन्ती ।
अस्यैव शोभामधिकां विधत्ते लोके चरित्रं महतां विचित्रम् ॥ ६०॥

निन्दन्तं सेतुभेदं जलनिधिविषये शीततां शीतशैले
कैलासे गम्यभावं विषधरभवने सर्पवासं सदर्पम् ।
यस्योदग्रप्रतापज्वलनचलनाद्वैरिणो चक्रभाजा
रक्षन्ति स्वं तृणेनाकुलितमतिहृदश्चित्रमेतच्चरित्रम् ॥६१॥
यत्कीर्त्तिर्मुदमाददाति गुणिनां कण्ठेषु लग्नां परां
त्रिष्वेव भ्रमणं करोति भुवनेष्वेकाकिनी स्वेच्छया ।
भूपानां नरिनर्त्ति संसदि सदा सर्वाङ्गसंदर्शिनी
लोके सा विदिता तथाप्यतिमती पुण्यैर्यशः प्राप्यते॥६२॥
अब्दे ब्रह्म-जगद्युगेन्दु(१४३१)गणिते श्रीविक्रमार्कप्रभो-
र्माघे मासि वलक्षपक्षललिते षष्ठ्यां सुधांशोर्दिने ।
दीनानां परितापपापदलने ग्रन्थं निघण्टुं किल
श्रीदः श्रीम[द]नो व्यधत्त चतुरः सच्चक्रचूडामणिः ॥६३॥
अनवद्यानि पद्यानि दश द्वादश वा मया ।
परेषामपि केषाञ्चिल्लिखितानीह कौतुकात् ॥६४॥
[वाचस्पतेः पितुरुदारसुवन्द्यविद्या वाचस्पतेश्चरणपङ्कजषट्पदेन ।
वादीभपञ्चवदनेन कवीश्वरेण साहाय्यमत्र समकारि गुणाकरेण ॥]
यो राज्ञां मुखतिलकः कटारमल्लस्तेन श्रीमदन[नृपेण निर्मितेऽत्र ।
ग्रन्थेऽभून्मदननिर्मिते पूर्णा]कर्णानाममृतरसप्रददा प्रशस्तिः ॥६५॥
इति श्रीमदनपालविरचिते मदनविनोदे निघण्टौ वर्गश्चतुर्दशः॥१४॥

संवत् १८७७ मिति माघशुदि ११ बृहस्पतिवारान्वितायां लिखितं श्रीमत्पूज्याचार्य्यत्रिमलचन्द्रस्वामीजी-तच्छिष्य त्रिष्णाऋषि—तद्लघुभ्रातृविहारिऋषिराज्यं सिंहजीराजः शुभं भूयात् अमृतसरनगरमध्ये लिपीकृतम् ।

[ 6207 ]

**आदिः**— स्वस्ति श्रीजिनाय नमः ॥

स्तुवीमहि महामोहक्लेशान्तकभिषग्वरम् ।
त्रैधातुकनिदानज्ञं सर्वज्ञं दुःखहायने ॥१॥
कलाविलासान्मकरन्दबिन्दुमुद्राविनिद्रे हृदयारविन्दे ।
या कल्पयन्ती रमते कवीनां देवीं नमस्यामि सरस्वतीं ताम् ॥२॥
कवीन्द्रकुमुदानन्दमुकुन्दो वसुधाकरम् ।
वाचस्पतिमतिस्पर्द्धिशेमुषीचन्द्रिकोज्ज्वलम् ॥३॥

क्षुभ्यत्क्षीराब्धिकल्लोलमालोल्लासि यशःश्रियम् ।
गुरुं वन्दे जगद्वन्द्यं गुरुरत्नैकरोहणम् ॥४॥
श्रीसाहसाङ्कनृपतेर्निरवद्यविद्यवैद्यान्तरङ्गपदपद्धतिमेव बिभ्रत् ।
यश्चन्द्रचारुचरितो हरिचन्द्रनामा स्वव्याख्यया चरकतन्त्रमलञ्चकार ॥५॥
आसीदसीमवसुधाधिपवन्दनीये तस्यान्वये सकलवैद्यकुलावतंसः ।
शक्रस्य दस्र इव गाधिपुराधिपस्य श्रीकृष्ण इत्यमलकीर्त्तिलतावितानः ॥६॥
संकल्पसम्मीलदनल्पविकल्पजल्पकल्पानलाकुलितवादसहस्रसिन्धुः ।
तर्कत्रयत्रिनयनस्तनयस्तदीयो दामोदरः समभवद्भिषजां वरेण्यः ॥७॥
तस्याभवत् सूनुरुदारवाचो वाचस्पतिश्रीललनाविलासी ।
सद्वैद्यविद्यानलिनीदिनेशः श्रीमल्हणः सत्कुमुदाकरेन्दुः ॥८॥
यद्भ्रातृजः सकलवैद्यकतन्त्ररत्नरत्नाकरश्रियमवाप्य च केशवोऽभूत् ।
कीर्त्तिर्निकेतनमनिन्द्यपदप्रमाणवाक्यप्रपञ्चरचनाचतुराननश्रीः ॥९॥
कृष्णस्य तस्य च सुतः स्मितपुण्डरीकखण्डातपत्रपरभागयशःप्रतापः ।
श्रीब्रह्म इत्यविकरालमुखारविन्दे सोल्लासिलासितरसार्द्रसरस्वतीकः ॥१०॥
तस्यात्मजः सरसकैरवकान्तिकीर्त्तिः श्रीमान् महेश्वर इति प्रथितः कवीन्द्रः ।
निःशेषवाङ्मयमहार्णवपारदृष्ट्या शब्दागमाम्बुसहखण्डरविर्बभूव ॥११॥
यः साहसाङ्कचरितादिमहाप्रबन्धनिर्माणनैपुणगुणागतगौरवश्रीः ।
यो वैद्यकत्रयसरोजकरोजबन्धुर्बन्धुः सतां च कविकैरवकाननेन्दुः ॥१२॥
इयं कृतिस्तस्य महेश्वरस्य वैदग्ध्यसिन्धोः पुरुषोत्तमस्य ।
देदीप्यतां हृत्कमलेषु नित्यमाकल्पमाकल्पितकौस्तुभश्रीः ॥१३॥
लब्धैः कथञ्चिदभिजातसुवर्णकारलीलेन कोशशतरत्नधिशब्दरत्नैः ।
विश्वप्रकाश इति काञ्चनबन्धशोभां बिभ्रन्मयाऽत्र घटितो मुखमण्ड एषः ॥१४॥
फणीश्वरोदीरितशब्दकोशरत्नाकरालोडनलालितानाम् ।
सेव्यः कथं नैष सुवर्णशैलो विश्वप्रकाशो विबुधाधिपानाम् ॥१५॥
भोगीन्द्र-कात्यायन-साहसाङ्क-वाचस्पति-व्याडिपुरःसराणाम् ।
सविश्वरूपामलमङ्गलानां शुभाङ्गबोपालितभागुरीणाम् ॥१६॥
कोशावकाशात् प्रकटप्रभावसम्भावितानर्घगुणः स एषः ।
सम्पादयन्नेष्यति वाञ्छितार्थान् कथं न चिन्तामणितां कवीनाम् ॥१७॥
आमित्रशैलचरमाचलमेखलाद्रिकैलाशभूमिवलयाद्यदिहास्ति किञ्चित् ।
एकत्र सम्भृतमगोचरशब्दरत्नमालोक्यतां तदखिलं सुधियः कवीन्द्राः ॥१८॥

यद्यस्ति वाङ्मयमहार्णवमन्थनेच्छाप्राप्तं पदं फणिपतेर्यदि कौतुकं वः ।
विश्वप्रकाशमनिशं तदिमं निषेव्य सम्भाव्यतां परमशाब्दिकशेखरश्रीः ॥१९॥

सतां पुस्तकसम्भारभारमोक्षः कृतो मया ।
नानानुशासनमिदं संपूर्णं तन्वतादद्भुतम् ॥२०॥

एकद्वित्रिचतुःपञ्चषड्वर्णानुक्रमोज्ज्वलैः ।
कान्तादिवर्गैर्नानार्थसङ्ग्रहोऽयं वितन्वते ॥२१॥

नानार्थप्रथमान्तोऽत्र सर्वत्रादौ प्रदर्शितः ।
सप्तम्यन्तेषु शब्देषु वर्त्तमानः सुनिश्चितः ॥२२॥

दृष्टान्तेन सह क्वापि सप्तम्याधार एव च ।
स्पष्टा यल्लिङ्गभेदाय काऽप्यत्र पुनरुक्तता ॥२३॥

**अन्तः**— एतां कृतिं कृतधियः कृतकृत्यभावमापादयन्तु सदयं मदयन्तु वैते ।
नित्यं महेश्वरकवेः परिभावयन्तः सन्तः परोन्नतिरता हि भवन्ति लोके ॥२७॥

इति श्रीसकलवैद्यराजचक्रमुक्ताशेखररहस्यगद्यपद्यविद्यानिधेः श्री**महेश्वरस्य** कृतौ **वि**श्वप्रकाशाभिधाने नानार्थपरिच्छेदो द्वितीयः समाप्तः शुभम् ॥

[ 6210 ]

**अन्तः**— संवद्धनञ्जय-प्रदर-नग-द्विजराज(१८८८)हायने शुचिमासे प्राक्पक्षे षष्ठीकर्म्मवाटयां दैत्यगुरुघस्रे श्रीश्री**बृ**हत्खरतरगणे आचार्य्यश्री**सागर**चन्द्रसूर्यन्वये वा०श्री**म**हिमराजगणि वा०श्री**श**मसुन्दरगणि वा०श्री**सा**धुलाभगणि वा०**चारु**धर्म्मगणि-वा०श्री**स**मयकलशगणि वा०श्री**सु**खनिधानगणि-श्री**गु**णसेनगणिवाचनाचार्यश्री**य**शोलाभ-गणि–तद्विनेय**यु**क्तिसुन्द[रेण] लिखितं द्राक् पं०**म**नोहरयुक् श्री**को**ट्टडादुर्गे ।

आधिव्याधिहरो देवो **जी**रापल्लीशिरोमणिः ।
**पा**र्श्वनाथो जगन्नाथो नित्यनाथो नृणां श्रिये ॥१॥

**आ**दीश्व[र] नमस्तुभ्यं मह्यं देहि महोदयम् ।
कुर्वन्ति प्रार्थनाभङ्गं सन्तो नैव कदाचन ॥२॥

[6214]

**आदिः**— ध्यात्वाऽर्हतो गुरून् प्राज्ञान् वाग्देवीमपि भक्तितः ।
**श**ब्दरत्नाकरं कुर्वे शब्दभेदार्थसङ्ग्रहम् ॥१॥

**अन्तः**— इति वादीन्द्रश्री**साधु**कीर्त्युपाध्यायमिश्राणां शिष्यलेशेनोपाध्यायश्री**साधु**-सुन्दरगणिना विरचितायां **श**ब्दरत्नाकरनाम**श**ब्दप्रभेदनाममालायां सामान्यकाण्डः षष्ठः ।

श्रीमद्वीरपरम्परागतपरे श्रीपौर्णिमीयाभिधे
श्रीचन्द्रप्रभसूरिराट् समजनि स्वच्छेऽत्र गच्छे गुरुः ।
आचार्यानपरान् विजित्य च निजान्तेवासिनस्ते कृता
राज्ये सिद्धनृपस्य सार्वसभयैर्येनोद्धृता पूर्णिमा ॥१॥
तस्मात् सूरिवराः क्रमात् समभवन् श्रीधर्मघोषादयः
सद्ढंढेरकसञ्ज्ञके शुभगणे प्राधान्यशाखान्विते ।
पट्टे श्रीविनयप्रभाह्वसुगुरुः सूरीश्वरोऽभूत् ततः
पट्टे श्रीमहिमाप्रभाख्यगुरवो राजन्ति सूरीश्वराः ॥२॥
श्रीमत्पत्तनपत्तने प्रवरके ढण्ढेरके पाटके
श्रीमत्सङ्घसुवंशहंसनिकरैः सेव्यक्रमाम्भोरुहाम् ।
तेषां शैक्षकभावरत्नमुनिनाऽलेखि स्वयं पुस्तकं
षष्ठ्याऽर्के सुनभस्यमासि बहुले वर्षेऽश्व-षट्-सप्तके ॥३॥
अङ्कतोऽपि संवत् १७६७ ।

[6221]

**अन्तः**—राजर्षेर्देशरक्षाकृद गुमास्त्यु स च कथ्यते ।
हीमतिः सत्त्वमित्युक्ता यवनीनाममालिका ॥५३॥

इति श्रीजैनधर्मीयश्रीसोममन्त्रीश्वरात्मजविरचिते यवनीभाषायां तौरुष्कीनाममाला समाप्ता ॥ संवत् १७०६ वर्षे शाके १५७२ वर्त्तमाने ज्येष्ठशुक्लाष्टमीघस्रे श्रीसमाल-खानडेरके लिपीकृता महिमासमुद्रेण ।

(पश्चात्कालीनोऽयमुल्लेखः—)

श्रीजिनसमदरसुरजीचरण चुमताइजी आदेशकारीयाय रजस्मान छता तलोक-सीकेन त्रिकाल वन्दना अवधारशोजी ।

[6222]

**अन्तः**— नमः श्रीसोमनाथाय सोमाकाराय सम्भवे ।
भवेद् यस्य गुणान् वक्तुं न क्षमापि श्रुतिर्मदात् ॥१॥
या विभूषयति विश्वमशेषं यत्नतो नरपतिं शुचिवेषम् ।
देवतांशमिह साभिभजन्ती शर्म वो दिशतु वाग्विलसन्ती ॥२॥
सर्वभाषासु कौशल्यं के नेच्छन्ति नरोत्तमाः ।
यतो हि विज्ञतासम्पत् प्राप्यते राज्यसंसदि ॥३॥

सर्वदेशप्रसिद्धा ये सर्वशास्त्रविशारदाः ।
न ते कस्यां हि भाषायां जायन्ते दोषभाषिणः ॥४॥
सच्छ्रोत्रिया ब्रह्मविदां वरेण्या वरेण्यवाचोऽयमपि प्रपञ्चः ।
निश्चित्य चैवं गिरमारभन्ते प्रतापभट्टोऽप्यलिखन्नवोचत् ॥५॥
सर्वज्ञतेति पदमस्त्विह चेत् प्रसिद्ध्यै नाज्ञानृतापि विषये विदुषः क भानुः ।
उक्तेरितीलवरणेशाहरिभ्रमस्य नामालिमाशु लिखति स्म सुधीः स लक्षः (?) ॥६॥

[6226]

**आदिः**—प्रणम्य परमप्रीत्या पञ्च श्रीपरमेष्ठिनः ।
'परिग्रहारम्भमग्ना' इति श्लोकं विवृण्महे ॥१॥

प्राचीनार्वाचीनाचार्यचक्रचक्रवर्त्तिभिः श्रीमत्तपागच्छाधिराजैः महामहीपतिवितीर्ण-विस्तीर्णसन्मानैः श्रीहीरविजयसूरिभिः शतार्थपरीक्षाकृते समर्प्पितस्य श्रीयोगशास्त्रद्वितीय-प्रकाशद्वादशस्य श्लोकस्य शतार्थी क्रियते । तत्र तावच्चतुर्विंशतिजिना वर्ण्यन्ते ।

**अन्तः**—श्रीमत्तपागच्छाधिराजभट्टारकपुरन्दरश्री ६ श्रीहीरविजयसूरीश्वरराज्य पं० कविकविचक्रचक्रवर्त्तिपण्डितश्री ६ श्रीबुद्धिसागरगणिशिष्यपं० श्रीमानसागरगणिकृतं समाप्तं शतार्थविवरणमिति ।

पाञ्चाली किल पञ्चमी गतिरियं तां सेवितुं येऽभवन्
पञ्च श्रीपरमेष्ठिनां प्रतिदिनं पञ्चापि पाण्डोः सुताः ।
उद्यच्छारदशीतधामधवलास्तेषां प्रसादादियं
सम्पूर्णा समभूच्छतार्थविवृतिर्नानार्थरत्नावली ॥१॥

मेषोन्मेषवियोगाभावाद् भुवनेऽत्र सन्ततिः सततम् ।
वर्त्तिष्यते यदीया जयति सुधर्मा स गणनेता ॥२॥

तत्पट्टनिकषपट्टे सुवर्णवर्णैर्न्यधान्निजामभिधाम् ।
श्रीहीरविजयसूरिः सूरीणामग्रणीर्जयति ॥३॥

तारागणाधिपत्यं श्रयति शशी सोऽपि शर्वरीसमये ।
शशिगणनाथत्वमहो दिवानिशं श्रयति सैष गुरुः ॥४॥

स्वाङ्गसदनेऽप्यमातां स्वगुणानां नित्यमेधमानानाम् ।
वेश्मान्तरं विदध्रे येन श्रीविजयसेनमिषात् ॥५॥

सिंहस्य सुतः सिंहो भवेदित्युक्तिरेवैतद्गुणान् बिभ्रत् ।
श्रीहीरविजयसूरिर्व्यभाद् विजयदानगुरुपट्टे ॥६॥

कुमतगदग्रस्तजनं ज्ञात्वा जिनधर्मसदगदं गदितुम् ।
नासिक्याविव नाकात् समागतौ यक्षवेषमिषात् ॥७॥
पञ्चश्रीपरमेष्ठिनां धृतिकरं ध्यानं दधानौ सदा
पञ्चा[चा]रपरायणौ प्रतिदिनं पञ्चाक्षनिग्राहकौ ।
जायेतां जननीजनैकजनकौ सूत्रार्थदुग्धोदधी
तौ द्वावग्रगपूर्वगामिविजयौ श्रीहीरसेनाभिधौ ॥८॥
वरिवर्ति पुरोवर्त्ती विद्वच्चक्रेषु चक्रवर्त्ती च ।
श्रीबुद्धिसागरगुरुप्रतिभापरिभूतदेवगुरुः ॥९॥
तच्छिष्यैकभुजिष्योपमानकविमानसागराभिख्यः ।
व्याकृत्तवान् मुक्तार्थी शुभां शतार्थीमिमाममलाम् ॥१०॥
इति शतार्थविवरणप्रशस्तिः समाप्ता ॥

[ 6228 ]

**आदिः—** श्रेयःश्रीकृद् जरीजृम्भज्ज्योतिर्ज्योतिर्विभाति तत् ।
ज्योतिरिङ्गणतां ज्योतिर्मण्डलं याति यत्पुरः ॥१॥
प्रत्यूहपादपे पार्श्वं स्वस्तिकृत्पार्श्वमुत्तमम् ।
श्रीपार्श्वं नौमि तारङ्गपुराहं पार्श्वसेवितम् ॥२॥
श्रीलब्धिसागरगुरोः प्रसादादिह मन्दधीः ।
शतार्थी योगशास्त्राद्यपद्येऽस्य विदधाम्यहम् ॥३॥

स चायमादिश्लोकः—'नमो दुर्वाररागादि० ।'

**अन्तः—** प्राप्तालोको भूरिसोभाभिरामो विश्वाह्लादी नाशितश्यामपक्षः ।
सेर्षिव्रातो निरतमावृत्तताढ्यः शश्वज्जीयाच्चन्द्रवच्चन्द्रगच्छः ॥१॥
कल्याणयुक्तः सुमनोमनोज्ञः सन्नन्दनो वृद्धतपोगणोऽयम् ।
नन्द्यात् सुपर्वाद्रिरिवास्य गच्छा पादा इवान्ये पुरतो विभान्ति ॥२॥
अगाधतामब्धिरभीशुमंशुः स्थैर्यं सुमेरुर्हिमगुश्च सौम्यम् ।
यस्याकृत प्राभृतमस्तकामस्थाम्नोऽत्र सोऽभूज्जयचन्द्रसूरिः ॥३॥
जडोऽन्यकालुष्यकलापहर्ता सन्मानसस्थाय्यथ तद्विनेयः ।
चक्राङ्गवत् श्रीगुरुरत्नसिंहः पक्षद्वयीशुद्धिकृतो बभूव ॥४॥

किं बहुना—

शिष्यक्षेत्रे शब्दशास्त्रादिसीरैर्वापं वापमत्र वाक्योरुबीजैः ।
यैः क्षेत्रज्ञैः शुद्धवाक्सारणीभिः शिक्षा तेने बन्धुरं ज्ञानशस्यम् ॥५॥

तदुरुपट्टमल्पथतापनः परमदर्पकदर्पविनाशनः ।
उदयवल्लभसूरिरभूद् गुरुः सुरगुरूपमनिर्म्मलबुद्धिमान् ॥६॥

ज्ञात्वा सुधाधिकरसं स्वत आविवेश श्वभ्रं ह्रिया परमया किल यस्य वाचाम् ।
तत्पट्टकैरवविबोधनपार्वणेन्दुः श्रीज्ञानसागरगुरुः समभूत् शमीशः ॥७॥

ससंवरः सारसरस्वतीवरः सुवेल आतोरुगभीरतागुणः ।
मितद्रुवत् तस्य पदे लसद्वसुर्गुरुर्बभूवोदयसागराभिधः ॥८॥

छायाकरो विबुधसंहतिभिः प्रसेव्यो मेरुस्थिती रुचिरभूरिपदार्थदाता ।
कल्पद्रुवत् समजनि प्रकट[प्र]भावः श्रीलब्धिसागरगुरुस्तदनर्घपट्टे ॥९॥

यस्य प्रबुद्धजनताप्रमदप्रदात्र्या निस्तुल्यया सकलया कलया गुणाल्या ।
ज्योत्स्नाभया धवलिता धरणी स जीयात् तत्पट्टकैरवशशी धनरत्नसूरिः ॥१०॥

श्रीलब्धिसागरगुरुक्रमपद्मभृङ्गसौभाग्यसागरविनेयकणेन चक्रे ।
नन्दर्षि-बाण-रजनीश(१५७९)मिते सुवर्षे मासे सहेधिचतुरर्थशतार्थवीथी ॥११॥

वदावदाः प्रोन्मदवादिवादिदन्तावलोद्दलविगालनपञ्चवक्त्राः ।
वक्त्राब्जगौरशुचिरोचितिरस्कृताब्जाः सौभाग्यसागरमुनीशवरा जयन्तु ॥१२॥

वक्त्रहिमाचलमूलाभिरगाद् रङ्गेव भगवतो यस्य ।
स चतुःशतार्थवीथी कुशलं दद्याद् गुरुः कुशली ॥१३॥

इति प्रशस्तिसत्कवर्णव्यक्तयुक्तिः ॥

[ 6229 ]

**आदिः-** यद्भारती कामगवीव पुंसां विचित्रमर्थं हृदयानुरूपम् ।
धर्मोपदेशावसरे प्रसूते स वः शिवं तीर्थकरः करोतु ॥१॥

लसन्ति यस्याः स्मरणेन सूक्तयः पयोदपङ्क्तेः पयसा लता इव ।
मतिप्रबोधात् कृपयाऽनुगृह्णद् जगन्ति सा वः श्रुतदेवताऽवतात् ॥२॥

प्रभुर्बभूवाजितदेवसूरिः स चन्द्रगच्छाम्बरपूर्णचन्द्रः ।
जिनेन्द्रधर्म्माम्बुनिधिः प्रपेदे घनोदकः स्फूर्त्तिमतीव यस्मात् ॥३॥

जयति विजयसिंहः सूरिरुद्दामकामद्विरदविजयसिंहस्तस्य पादाब्जहंसः ।
चरणकरणनिष्ठां यस्य संवीक्ष्य लोकः कुवलयदलमृद्वीं वेत्ति धौताऽसिधाराम्॥४

तस्यांह्रिपङ्केरुहचञ्चरीकः सोमप्रभाचार्य इति प्रसिद्धः ।
परावबोधाय परार्थवृत्तः शतार्थवृत्तस्य तनोति वृत्तिम् ॥५॥

[ 6230 ]

**अन्तः**– इति श्री**सोम**सुन्दरसूरि-तत्पट्टप्रभाकरश्री**जय**चन्द्रसूरिवाचकचक्रचक्रवर्त्ति-**चा**रित्ररत्नगणि-शिष्यश्री**जिन**माणिक्यगणिरचिता शतार्थी जीयात् ।

आसीत् सोमगणव्योमसोमः श्री**सोम**सुन्दरः ।
सूरिर्भूरिगुणग्रामः रामणीयकमण्डितः ॥१॥

तत्पट्टोदयशोभाग्रजाग्रत्तरदिवाकराः ।
**मुनि**सुन्दरसूरीन्द्राः पारीन्द्राः परवारणाः ॥२॥

सूरिः श्री**जय**चन्द्रोऽभूद् यशोनिरतन्द्रचन्द्रिकः ।
कृतिनामाननं येनाकारि कैरवकाननम् ॥३॥

तत्पट्टकमलालाभे कालेयतिलकाकृतिः ।
अभूत् प्रभूतविद्याभूः सूरिः श्री**र**त्नशेखरः ॥४॥

तत्पट्टप्रकटाम्भोजप्राभातिकविभावति ।
भाति विश्वातिशायिनि श्री**ल**क्ष्मीसागरश्चिरम् ॥५॥

सूरि**सो**मजयाह्वानः स्थानमानन्दसंविदाम् ।
द्वितीयोऽप्यद्वितीयश्री**विशेषगुण**शेखरः ॥६॥

षट्तर्कागममर्मधर्मसमयग्रोन्मथ्यजाड्यप्रथः
साक्षाल्लक्षणवेदिवारणघटासंघट्टघण्टापथः ।
आसीद् वाचकनायकः मुकृतिनामानन्दनः स्पन्दनः
सर्वाङ्गीणगुणश्रियां युगवरश्**चा**रित्ररत्नो गुरुः ॥७॥

**जिन**सुन्दरशिष्यः सन् युक्तं यो जिनसुन्दरः ।
कुतुकं यत्र कं चक्रे जिनं श्री**जिन**सुन्दरम् ॥८॥

साष्टाऽष्टादशलक्षणाऽकृत मतिप्राग्भारसारस्वतो–
द्वारस्तारकवीरजित्वरयशःसम्भारविश्वम्भरः ।
तच्छिष्यप्रतिपक्षपर्वतपथपक्षच्छिदाखण्डलः
क्षोणीमण्डलमण्डनः स **जिन**माणिक्यो गुरुर्गीयते ॥९॥

बुद्धिः का तव बौद्ध शुद्धिमपि रे नैयास्तु नैयायिक
व्याख्येयोऽसि न साङ्ख्य सैष विदुषां सीमा न मीमांसकः ।
दूरं दूरमरे विशन्तु विवरे यद्वागिरेर्गह्वरे
यस्माज्जल्पभरेऽपि जातु **जिन**माणिक्यो न शक्यः परैः ॥१०॥

हार्षीवित्तान्यंहार्षीत्तहि (?) बहुविदुषामाभिनन्दीव बन्दी

स प्राणी स्यान्न वाणी न च रुचिरतया चावलीत्यावली वाग् ।

मायूरी कर्णपूरी भवति न सुतरामामरी पामरी यद्-

वाचः श्रीवाचकेन्द्रो जनयति जिनमाणिक्यनामाऽभिरामाः ॥११॥

भाष्यं साक्षितया विधाय सुधियो ये त्वर्थमात्रं जगु-

र्ये वा संशयिताश्च ते न किल तास्तेनैष ते तेऽञ्जलिः ।

ये लक्ष्यार्थसमर्थनप्रतिदिनव्यग्रात्मनस्तेष्वयं

सन्नद्धो भवतीति रीतिरनघा श्रीवाचकाधीशितुः ॥१२॥

स्थाने स्थाने शतार्थीति यथार्थाह्वानयोगतः ।

योगतो जगति ख्यातिप्रतिसोमप्रभादिति ॥१३॥

चारित्ररत्नवाचकचरणपरिचारचारुचरितेन ।

रचिता तेन शतार्थी सतां कृतार्थीकरोतु नः ॥१४॥ युग्मम् ।

व्यालाधीशमृणालशालिनि रजोजिह्वानुभाजाऽलिनि

प्रोद्यद्दिग्दलमालभारिणि नभोभृङ्गौघशृङ्गारिणि ।

यावद् राजमरालति प्रतिकलं राजा द्विपक्षीं दधत्

तावच्छास्त्रमिदं विदन्तु हृदयानन्दप्रदं नन्दतात् ॥१५॥

इति श्रीशतार्थविवरणं संपूर्णम् । ग्रन्थाग्रम् १६९० श्लोकाः ॥

संवत् १६४४ वर्षे श्रावणवदि १४ सोमदिने लिखिता पं० श्रीपद्मविजयगणि-शिष्यहर्षविजयगणिना प्रतिरियं स्ववाचनार्थं परोपकाराय च वाच्यमाना चिरं नन्दतु शुभं भवतु कल्याणं भूयात् सकलसङ्घस्य ॥ श्रीव्याघ्रसेनाभिधे पुरे ।

[ 6232 ]

**अन्तः**— श्रीमद्वाचकचक्रवर्तिसुगुरुश्रीहर्षकल्लोलसत्-

शिष्यः पण्डितमण्डली बहुमतः श्रीलक्ष्मीकल्लोलकः ।

सैवेदं रचयांचकार सुपरागार्थाऽष्टयुक्तं शतं

तेनाप्नोतु कृती जनः शिवसुखं पुण्येन लब्धोदयम् ॥२८॥

इति परागशब्दाष्टोत्तरशतार्थनिबद्धं साधारणजिनस्तवनं पं० लक्ष्मीकल्लोलगणिना कृतम् ॥

[ 6243 ]

**वृ०अन्तः**— गङ्गेशगुरुपादाब्जमकरन्दप्रसादतः ।

सारोद्धारः कृतोऽनेन प्रीयतां परमेश्वरः ॥२६॥

[6244]

**आदिः**— श्रीसद्गुरवे नमः ।। ग्रन्थकर्त्ता प्रारिप्सितप्रतिबन्धकव्यूहोपशमनाय नमस्कारात्मकं मङ्गलमार्ययाह—

श्रीविमलेन्दुं मौलौ यो दध्रे तं गणाधिपं नत्वा ।
क्रियते साष्टककर्म्मः श्रेष्ठः प्रस्तारविमलेन्दुः ।।१।।

व्याख्या—मया विहारिमुनिना प्रस्तारविमलेन्दुः क्रियते ।

**अन्तः**— श्रीसौभरिणमुनीश्वरविरचितायां द्व्यक्षरनाममालायां अत्र द्वयोः श्लोकयोरष्टपादानामाद्याक्षरैः कर्त्तुर्नाम सूचितं यथा विहारिमुनिना चक्रे इति प्रस्तारविमलेन्दुः समाप्तः ।।

संवत् १९७४ मिति अश्विन् वदि चतुर्दशी लिपीकृतम् ।। श्री १०८ श्रीश्रीश्रीमत्पूज्याचार्य्यश्रीविजयचन्द्रजी—तच्छिष्यदासानुदासपूज्यदेवेन्द्रऋषिणा वैरोवालमध्ये केसरऋषिनिमित्तार्थम् ।।

[[6251]

**वृ०आदिः**— नत्वा गणेशं वाग्देवीं पिङ्गलं मातरं गुरुम् ।
अन्यानपि च भाष्यादिकर्तॄंश्छन्दोविशारदान् ।।१।।
श्रीभट्टरामेश्वरसूरिसूनुर्नारायणः स्वामनुरुद्ध्य बुद्धिम् ।
सङ्क्षेपवृत्त्या विवृतिं सुवृत्तरत्नाकरे व्यक्ततया तनोति ।।२।।

**वृ०अन्तः**—भट्टश्रीनागनाथात् समजनि विबुधश्चाङ्गदेवाख्यभट्टः
प्रासोष्टासौ तनूजं रघुपतिनिरतं भट्टगोविन्दसञ्ज्ञम् ।
विश्वामित्रान्ववायाम्बुधिविधुरधिकं वर्द्धते तत्तनूजो
विद्याब्धौ लब्धपारः प्रथितपृथुयशा भट्टरामेश्वराख्यः ।।१।।
नारायणेन सुधिया काश्यां निवसता सता ।
वृत्तरत्नाकरे टीका तद्भुवा रचिताश्रिता ।।२।।
वेद-भूयुतशके द्वि-ख-षड्-भू(१६०२)संमिते ।
सितगकार्त्तिकरुद्रे ग्रन्थपूर्त्तिसुकृतं किल कुर्मः ।।३।।
इति श्रीवृत्तरत्नाकरटीका समाप्ता ।।छ।।

संवत् १७१७ वर्षे आसोसुदि १५ दिने सोमवासरे श्रीदशाडानगरे लिखितं पण्डितश्रीरत्नविजयगणिशिष्यमुनिमानविजयेन श्रीशङ्खेश्वरपार्श्वनाथप्रसादात् ।।
**अन्तः**— इति श्रीभट्टकेदारविरचिते छन्दोलक्षणे षष्ठोध्यायः ।। समाप्तमिदं वृत्त-

रत्नाकरच्छन्दःशास्त्रम्। महोपाध्यायश्री१०८श्रीविनयविजयगणि-शिष्यमुनिऋद्धिविजय-वाचनार्थम्॥

[6252]

**अन्तः**—वृत्तरत्नाकरे वृत्तिं गणिः समयसुन्दरः।
षष्ठाध्यायसम्बद्धा पूर्णीचक्रे प्रयत्नतः॥१॥
संवति विधिमुख-निधि-रस-शशिसङ्ख्ये(१६९४) दीपपर्वदिवसे च।
जालोरनामनगरे लुणियाकसलार्पितस्थाने॥२॥
श्रीमत्खरतरगच्छे श्रीजिनचन्द्रसूरयः।
तेषां सकलचन्द्राख्यो विनेयः प्रथमोऽभवत्॥३॥
तच्छिष्यसमयसुन्दरः एतां वृत्तिं चकार सुगमतराम्।
श्रीजिनसागरसूरिप्रवरे गच्छाधिराजेऽस्मिन्॥४॥
यः कोऽपि मत्सरी मूढः प्रशस्तिं न लिखिष्यति।
सः लोके प्राप्स्यते निन्दां कुणिर्भावी परत्र च॥५॥
इति वृत्तरत्नाकराख्ये छन्दसि समयसुन्दरोपाध्यायविरचितायां वृत्तरत्नाकराख्य-सुगमवृत्तौ षष्ठोऽध्यायः॥६॥

**प्रान्ते**—संवद्वह्नि-निधान-सिन्धु-वसुधासङ्ख्ये(१७९३) मधौ मासि च।
पक्षे शुद्धतरे गुरौ सुदिवसे आद्यां तिथौ मोदतः।
छन्दःशास्त्रमिदं सुवृत्तिसहितं दुर्गे विहारी मुनिः
स्वात्मार्थं व्यलिखत् पुरे सदुदयाभिख्ये त्वरातः पुनः॥१॥

[6258]

ग्रन्थस्यास्य प्रशस्तिस्तु ग्रन्थाङ्क 6251 वद् ज्ञेया।

[6260]

**आदिः**— तमोगुणविनाशिनी सकलकालमुद्द्योतिनी
धरातलविहारिणी जडसमाजविद्वेषिणी।
कलानिधिसहायिनी लसदलोलसौदामिनी
मन्दतरविलम्बिनी भवतु कापि कादम्बिनी॥१॥
श्रीगोवर्द्धनभूपनन्दन तव प्रोद्दामवीरस्फुरत्-
सङ्ग्रामे यशवन्तसिंहमहिमारम्भातिसम्भावना।
सद्यश्छिन्नकबन्धकन्धरगलाद्धाराभरामोदिता
सा चण्डी सहयोगिनीभिरभितः संवर्द्धयत्वाशिषा॥२॥

विद्वद्भिः परिवारभारकलना प्रोद्भूतचिन्तालसै-
भूपालैः कमलाविलासरसिकैः सन्त्यज्यमानादरा ।
गौडश्रीयशवन्तसिंहनृपते ! त्वां बद्धशुद्धादरं
कालेऽस्मिन्नधिदेवता खलु गिरां सम्भावयित्वाशिषा ॥३॥
वैरिव्रातविमर्दनिष्कृपकृपारामैकवंशध्वज-
श्छन्दःशास्त्रविचारपारगयशःकर्पूरपूरोज्ज्वल [:] ।
गौडश्रीयशवन्तसिंहनृपते ! सद्वेतुरत्नावली-
वृत्ताकर्णनतः स्वकर्णपुटयोर्माधुर्यमाधारय ॥४॥

**अन्तः–** अथ कवित्वकामः ।
मण्डितभरतखण्डदण्डितप्रचण्डदण्डखण्डितविपक्षलक्षलक्षिता न ते
परावरापारया न यशोराजिराजमान दानमानसावधान मानसमहीपते ।
गौडवंशहंसधीर धीरयशवन्तवीर वीरयुद्धशुद्धभावभावितमहामते !
लब्धभागनागनागनागनगजविराम धामककवितकाम नाम को विराजते(?) ॥
द्वैताद्वैतमतादिनिर्णयविधिप्रोद्बुद्धबुद्धिः श्रुतो
भट्टाचार्यशतावधान इति यो गौडोद्भवोऽभूत् कविः ।
नानाशास्त्रविदा तदात्मज चिरं जीवे तदा तन्मुदे
गौडश्रीयशवन्तसिंहनृपते ! श्रीवृत्तरत्नावली ॥
इति श्रीचिजीवभट्टाचार्यकृतवृत्तरत्नावली ॥

[ 6267 ]

**आदिः–** श्रीमत्सारस्वतं धाम नत्वा स्तुत्वा च सद्गुरुम् ।
टीका श्रीश्रुतबोधस्य छन्दसः क्रियते मया ॥१॥

**अव०अन्तः–** श्रीमन्नागपुरीयपूर्वकतपागच्छाम्बुजाऽहस्कराः
सूरीन्द्रा बुधचन्द्रकीर्त्तिगुरवो विश्वत्रयीविश्रुताः ।
तत्पादाम्बुरुहप्रसादपटुगीः श्रीहर्षकीर्त्याह्वयो-
पाध्यायः श्रुतबोधवृत्तिमकरोद् बालावबोधाय वै ॥१॥
इति श्रुतबोधस्यावचूरिः सम्पूर्णा, समाप्तोऽयं ग्रन्थः ॥

[ 6271 ]

**मू०आदिः–**वन्दे विश्वेश्वरं देवं वाचस्पतिमुखान् गुरून् ।
मातरं पितरं नत्वा निर्विघ्नसितसिद्धये ॥१॥

नत्वा भवानीचरणारविन्दं मनोहरेण क्रियते विचार्य ।

माणिक्यमल्लक्षितिपालतुष्ट्यै सुबोधिनीयं श्रुतबोधटीका ॥२॥

इति समस्तनृपतिशिरोमणिरञ्जितपाठमाणिक्यमल्लकारिता श्रीमनोहरशर्मकृता श्रुतबोधटीका सुबोधिनी समाप्ता ॥

[ 6272]

**वृ०आदिः**– . .जननसमर्था वादिना यस्य पादा–

वसुर-सुर-मनुष्यैर्भूरिविद्भिर्हि नत्वा ।

ललितपदसुरम्या शास्त्रबोधस्य टीकां

मुनिरहमिह कुर्वे हंसराजो विचित्राम् ॥१॥

सुगुरुवचनदीपैर्दर्शितं तत्त्वरूपं

मम हृदयगृहं तेऽनुग्रहाद् यत्तदेव ।

भृशमहमभिधास्ये बालबोधिप्रसन्नं

निजपठननिमित्तं बालबोधाय चैव ॥२॥

छन्दसां अहं कविः कालिदासस्तत्श्रुतबोधं........।

**वृ०अन्तः**– पूज्यश्रीनानकाख्यो निखिलगुणगणैर्युक्त आत्मीयगच्छ-

स्वामी जीमूतनादो विहरति भुवने साम्प्रतं तत्त्ववेत्ता ।

छात्रस्तस्यास्ति हंसः पटगुरुवचनस्थापिनी चारुबुद्धि-

ष्टीकास्तेनाभिरामा जगति विरचिता श्रुतबोधस्य मृद्वी ॥१॥

श्रीमद्विक्रमभूपतेः शर-चतुः-षट्-भूमिसंयुक्तके(१६४५)

वर्षे चैत्रकमासलोकविदिते पक्षे द्वितीये सिते ।

पञ्चम्यां कविवासरे विलिखिता हंसेन टीकाऽमला

श्रीमन्नानक....मुनिना भूयाच्चिरं के वयम् ॥२॥

इति श्रीश्रुतबोधटीकाबालावबोधिनी समाप्ता ॥

श्रीविक्रमात् सिद्धि-रसर्षि-चन्द्रे(१७६८)तुल्ये शुभे हायनके च मासे ।

सत्कार्त्तिके पक्षसुनिर्मलाभे.... .शुभवासरे रवेः ॥१॥

लिलेख जीताम्बुनिधिः प्रयत्नात् टीकां सुटीकां प्रकटार्थरम्याम् ।

श्रीशास्त्रबोधस्य च कालिदासकृतस्य शोध्या परमार्थविद्भिः ॥२॥

[ 6284 ]

**आदिः**–अमरीकबरीभारभ्रमरीमुखरीकृतम् ।

दूरीकरोतु दुरितं गौरीचरणपङ्कजम् ॥१॥

**अन्तः**– इति श्रीअलङ्कारमूलकारिका समाप्तिमगमत् ॥

संवत् १८२५ वर्षे महाशुदि ५ गुरौ भटश्रीभगवानपार्श्वे पं० मुक्तिसौभाग्यगणिभिः पठितोऽयमलङ्कारग्रन्थः श्रीवडोदरानगरे श्रीफत्तेसिंहजीराज्ये । श्रीमत्पुण्यसागरसूरीश्वरैर्दत्तोऽयमलङ्कारग्रन्थः ॥

[6292]

**अन्तः**– इति श्रीजिनदत्तसूरिशिष्यमहाकविचक्रचूडामणिश्रीमदमरचन्द्रविरचितायां काव्यकल्पलता-कविशिक्षावृत्तौ अर्थसिद्धिप्रताने चतुर्थे समस्यास्तबकः सप्तमः समाप्तः ॥ ग्रन्थाग्रम् १४५॥(?) सम्पूर्णश्चायमर्थसिद्धिप्रतानः चतुर्थः ॥ एवं ग्रन्थाग्रम् ११२२(?) ॥

श्रीमद्वायटगच्छवारिधिविधोः पादारविन्दद्वये
येन श्रीजिनदत्तसूरिसुगुरोः शृङ्गारभृङ्गायितम् ।
स श्वेताम्बरमौलिरत्नममरः श्रीवीरतीर्थङ्कर–
प्रह्वात्माऽकृत काव्यकल्पलतिकावृत्तिं सतां सम्मताम् ॥१॥
सिक्तेयमुद्धृतैः शास्त्राब्धिभ्यः सारसुधारसैः ।
काव्यकल्पलताऽऽकल्पं तनोतु सुमनोमुदम् ॥२॥
काव्यमेव परब्रह्मास्वादसोदरशर्मदम् ।
आलोकं पालयामास कालिदासकवेर्यशः ॥३॥
वाल्मीकि-व्यासयोर्विश्वे विश्वदिङ्मूलकूलगा ।
कल्पान्तोल्लङ्घिनी कीर्त्तिः काव्यादेव विजृम्भते ॥४॥
काव्यकल्पलतावृत्तौ ससूत्रायामनुष्टुभाम् ।
त्रिसहस्रत्रिशती च सप्तपञ्चाशदुत्तरा (३३५७)॥५॥
समाप्ता चेयं काव्यकल्पलताकविशिक्षावृत्तिः ॥
नन्दाकाश-शरेन्दुमण्डल(१५०९)मिते संवत्सरे माधवे
मासे सोमजवारकेऽतिविमले शुक्लद्वितीयादिने ।
सानन्देन जिनप्रमोदगणिना श्रीचित्रकूटाऽचले–
ऽलेखि श्रीयुतकाव्यकल्पलतिका स्वान्योपकृत्यै शुभम् ॥१॥

श्रीतपागच्छाधिराजपरमगुरुश्रीमुनिसुन्दरसूरिशिष्यशिरोमणिश्रीलक्ष्मीसागरसूरिशिष्येण ।

[6314]

**अन्तः**–जयन्ति याज्ञिकश्रीमन्महादेवाङ्गजन्मनः ।
सूक्तपीयूषवर्षस्य जगदेवकवेः गिरः ॥६॥

महादेवः सत्रप्रमुखमखविध्येकचतुरः
सुमित्रातद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
प्रणीतस्तेनासौ सुकविजयदेवेन रचित-
श्चिरं चन्द्रालोकः सुखयतु मयूखैर्दशदिशः ॥

इति श्रीपीयूषवर्षपण्डितश्रीजयदेवविरचिते चन्द्रालोकेऽभिधास्वरूपो नाम मयूखः समाप्तश्चायं ग्रन्थः ।

वृ०अन्तः—श्रीवीरभद्रदेवेन भूदेवामरशाखिना ।
यशोदागर्भरत्नेन यत्नेनेदं विनिर्मितम् ॥
लक्ष्मीर्वक्षसि कौस्तुभप्रणयितो यावत्तथार्द्धाङ्गगता—
मङ्गीकृत्य पुरद्विषो गिरिसुता स्थेमानमालम्बते ।
यावद्वेदगिरः पुराणविधयस्तावद् भुवो मण्डले
चन्द्रालोकविकाशमेष कुरुतां ग्रन्थोऽभिरामोदयः ॥७॥
श्रीवीरभद्रभूपतिलब्धनिदेशेन यत्नेन ।
चन्द्रालोकमयूखो दशमः स्पष्टार्थतां नीतः ॥८॥

इति श्रीमहाराजाधिराजश्रीरामचन्द्रदेवात्मजयुवराज—श्रीवीरभद्रदेवादिष्टमिश्रबलभद्रात्मजसकलशास्त्रारविन्दप्रद्योतनभट्टाचार्यविरचिते चन्द्रालोकप्रकाशे शरदागमे दशमो मयूखः समाप्तः ॥१०॥

[6320]

आदिः—शृङ्गार-हास्य-करुणा-रौद्र-वीर-भयानकाः ।
बीभत्साद्भुत-शान्ताख्या रसाः पूर्वैरुदीरिताः ॥१॥
एके तु निर्विकारत्वान्न शान्तं मेनिरे रसम् ।
शमादयस्तु पूर्वोक्तरसेभ्यो न पृथग् मताः ॥

अन्तः— इति रसकलिकाभिधानमलङ्कारं समाप्तमिति ॥ श्रीरस्तु । ग्रन्थाग्रम् ६३५॥ काशीलिपेरियं प्रतिरलङ्कारस्य लिखिताऽस्ति तेन शोधनीया साधुभिः ।

[ 6327 ]

अन्तः— यन्मया जल्पितं बाल्याद् व्यक्तमव्यक्तमेव वा ।
कृपयैतदनुग्राह्य साधुभिर्दीनवत्सलैः ॥१॥
शेषावतंसश्रीशेषनृसिंहतनयः सुधीः ।
एनां मनोविनोदाय मञ्जरीव्याकृतिं व्यधात् ॥२॥

इति श्रीसकलपण्डितघटाग्रणीयश्रीमच्छेषवंशालङ्कारभूतसकलविद्वज्जनवृन्दचूडामणिमरिचपिञ्जरितचरणयुगलकलिशेषावतारश्रीमच्छेषनृसिंह. .....श्रीनृसिंहचरणोपासिनाऽवधपुरवासिना श्रीशेषचिन्तामणिना निर्मितो रसमञ्जरीपरिमलः समाप्तः ॥

[6337]

**मू०अन्तः**— इति मन्त्रीश्वरवाग्भटविरचिते वाग्भटालङ्कारे पञ्चमः परिच्छेदः समाप्तः । सर्वसूत्रश्लोकसङ्ख्या २९१॥

कृतसकलकविहर्षे पं०श्री५श्रीहर्षसोमगणिशिष्यकविकोटिप्रवेकः पं०श्री५श्रीविवेकविमलगणिचरणकमलचञ्चरीकपं०हंसविमलगणिनाऽलेखि ।

संवत् १६५५ वर्षे वैशाखवैशाखादिने मङ्गलपुरनगरे वाच्यमानं चिरं विजयतां पुस्तकरत्नमिदम् ॥

**वृ०अन्तः**— इति वाग्भटालङ्कारटीकायां पञ्चमः परिच्छेदः समाप्तः ।

श्रीचन्द्रगच्छगगनाङ्गणचन्द्रसान्द्र-
श्रीसोमसुन्दरगुरोः प्रणयप्रसादात् ।
श्रीवाग्भटेऽत्र गुरुराजविशालराज-
शिष्यो व्यलेखयदनुत्तरसाधिकारम् ॥१॥

[ 6358 ]

**आदिः**— कल्याणबहुलं देसीवसन्तं ललितं मुदे ।
नरनारायणं वन्दे श्रीरागं सुविभासकम् ॥१॥
विट्ठलेन समुद्धृत्य सारं नर्तननिर्णयात् ।
श्रीमत्कपिलमुन्यर्थं क्रियते रागमालिका ॥२॥

**अन्तः**— अनन्तरागाः सन्त्यन्ये नानादेशजनाश्रिताः ।
एतेषामुपरागाः स्युरुद्यतां ते च तद्विदो ॥१२॥
नरपतिसुसभायां कण्ठसद्भूषणार्थं
सकलगुणिगणाग्रागविद् विट्ठलोक्तम् ।
विबुधगुणसरूपैर्योजिता रागमाला
सुललिततरकण्ठः धार्यतां सर्वलोकैः ॥१३॥
दशशतकरमालाभानुभिर्भानुभानु-
र्द[श]शतशिरसाऽभूद्धार्यते सच्छिरोभिः ।
दशरथसुतनामोच्चारमात्रं तु याव-
न्निवसतु भुवि तावद्विठ्ठली रागमाला ॥१४॥

शाके वस्वङ्कवेदाञ्चकपरिगणिते धातृसंवत्सरेऽस्मिन्
आषाढे कृष्णपक्षे शशधरसुदिने पञ्चमीरेवतीमे ।
नागाम्बा-धर्मसूनुद्विजवरतिलको विट्ठलोऽस्तीह विद्वां-
स्तेनेयं रागमाला रसिकजनगणे भूषणार्थं कृताऽस्ति ॥२५॥

इति श्रीकर्णाटकजातीयपुण्डरीकविट्ठलविरचिता रागमाला सम्पूर्णा ॥ लिखितं ब्राह्मणरामचन्द्रेण संवत् १८९७ फा० कृ० ४ ।

[ 6365 ]

आदिः— आनन्दनिर्भरपुरन्दरपङ्कजाक्षीनाट्यक्षणत्रुटितहारलताविमुक्तैः ।
मुक्ताफलैः किल दिवापि विसर्प्पितारा यद्देशनावनिरभूत् स जिनः श्रिये वः ॥१॥
विश्वस्य संशयमयज्वलनो ग्रहेतिनिर्व्वापणाय किल या वहते करेण ।
प्रौढं कमण्डलुमहो अमृताभिपूर्ण्णं सा भारती भवतु वः श्रुतदानवीरा ॥२॥
न क्रूरकुग्रहधराय नदीश्वराय नात्यन्ततापविषमाय दिवाकराय ।
नोद्यत्कलङ्ककलुषाय निशाकराय तस्मै नमोऽस्तु गुरवे गुरुवैभवाय ॥३॥
शैलात्मजाकोहलदन्तिलाद्यैरन्यैश्च भोजप्रमुखैः प्रणीतान् ।
सद्ग्रन्थसार्थान् परिषेव्य सम्यग् वितन्यते सानुभवं च किञ्चित् ॥४॥
तद्गीतं स्तुमहे यस्माद् रावणोऽपि निशाचरः ।
त्रैलोक्यविजयी जातो हरात् प्राप्य वरं वरम् ॥५॥
गीतस्वादाऽनभिज्ञेभ्यो मनुष्येभ्यो वरं मृगाः ।
गीतस्वादेन ददते गातुः प्राणान् क्षणेन ये ॥६॥
गीताह्लादनिलीनाश्च देवा नागादयस्तथा ।
अनेहसमसंख्यातं गतं चापि न जानते ॥७॥
देशे देशे च यत्सिद्धं नृपाणामपि मन्दिरे ।
गीतं वाद्यं च नृत्यं च देशीति प्रोच्यते बुधैः ॥८॥
सर्वे[षा]मपि लोकानां गीतं प्रीतिदमुच्यते ।
अत एव पुरा गीतं मुख्यत्वादुच्यते मया ॥९॥

अन्तः— बध्नीत धृतिं विबुधाः पण्डितजनवल्लभार्थबद्धेऽस्मिन् ।
संगीतोदधिसारे सुशास्त्ररत्ने निरुपमाने ॥४७॥
बुधपितृसोमाह्लादिनी तद्दर्शनजातसुरसकल्लोले ।
क्रीडत संगीताब्धावेतद्वाक्यप्रवहणेन ॥४८॥

राजानः प्रतिबोधिताः कति कति ग्रन्थाः स्वयं निर्म्मिताः
वादीन्द्राः कति निर्जिताः कति तपांस्युग्राणि तप्तानि च ।
श्रीमद्धर्मपुरीयगच्छमुकुटैः श्रीसूरिसूत्रामभि-
स्तच्छिष्यैर्मुनिभिश्च वेत्ति नवरं वागीश्वरस्तन्मितम् ॥४९॥
तद्गच्छेऽभयदेवसूरिसुगुरोः श्रीकर्णभूपेन यत्-
सञ्ज्ञा सन्मलधारिणोऽपि मलधारीति स्वयं निर्मिता ।
तद्वंशेऽमरचन्द्रसूरिरभवत् सच्छास्त्रसंगीतभृत्
तस्मात् श्रीतिलकाभिधो गुरुरभूद् यद्दत्तदीक्षस्त्वहम् ॥५०॥
तत्पट्टाद्रिरविश्चिरं विजयतां सन्मार्गसंदर्शकः
सूरीन्द्रः किल राजशेखरगुरुर्वादीभपञ्चाननः ।
शिष्यस्तस्य पुनः सुधाकलश इत्याख्यां दधानो व्यधात्
संगीतोपनिषत्सुसारमखिलं विज्ञानिसौख्याय यत् ॥५१॥
तावद् दुर्वादिसंवादतापव्यापः कथं कुतः ।
श्रीजैनशासने यावत् सुधाकुम्भो विजृम्भते ॥५२॥
संगीतोपनिषद्ग्रन्थं खाष्टाग्नि-शशि(१३८०)वत्सरे ।
ऋतु-शून्य-युगेन्द्वाब्दे (१४०६) तत्सारं चापि निर्म्ममे ॥५३॥

इति मलधारिगच्छमण्डनवादीन्द्रश्रीराजशेखरसूरि-शिष्यवाचना[ चा ]र्यश्रीसुधाकलशविरचिते स्वोपज्ञसंगीतोपनिषत्सारोद्धारे नृत्यपद्धतिप्रकाशनो नाम षष्ठोऽध्यायः ॥

संवत् १५९९ वर्षे पूर्ण्णिमागच्छे श्री६पुण्यप्रभसूरीणां शिष्यभीमाकेनेदं संगीतशास्त्रमलेखि ॥

[ 6445 ]

**आदिः**— त्रैलोक्याधिपतिं नमत्सुरपतेः कोटीररुग्मञ्जरी-
रञ्जत्पादसरोरुहं गुणगणाम्भोधिं दयाद्याकरम् ।
रागद्वेषमुखान् जयन्तमखिलारीनात्मभक्तेप्सितं
यच्छन्तं प्रणमामि मङ्गलनिधिं श्रीदेवदेवं सदा ॥१॥
सकलसुखनिधानं ज्ञानपीयूषसिन्धुं
भ्रमरमधुरगुञ्जारावराजत्कपोलम् ।
अखिलभुवननाथं बालघर्मांशुवर्णं
करधृतपरशुं तं नागवक्त्रं नमामि ॥२॥

× × × ×

आत्रेयं चरकं च [सु]श्रुतमथो भोजाभिधं वाग्भटं
सद्वृन्दं गदनागसिंहमतुलं पाराशरं सोढलम् ।
हारीतं तिसरं च माधवमहाश्रीपालकाप्यादिकान्
सद्ग्रन्थानवलोक्य साधुविधिनैवैतांस्तथान्यानपि ॥५॥
यः श्वेताम्बरमौलिमण्डनमणिः सत्पूर्णिमापक्षवान्
यस्यास्ते वसतिः समृद्धनगरे त्र्यंबावतीनामके ।
नत्वा श्रीगुरुभावरत्नचरणौ ज्ञानप्रकाशप्रदौ
सद्बुध्या जयरत्न आरचयति ग्रन्थं भिषक्प्रीतये ॥६॥
सद्वैद्यकण्ठमणिभूषणकान्तिहेतौ ग्रन्थोत्तमे ज्वरपराजयनामकेऽस्मिन् ।
ज्ञानप्रकाशनरवौ मुनिरूपणं स्यादुत्पत्तिरूपपरिचिह्नचिकित्सितानाम् ॥७॥

अन्तः— भूमिमण्डलमण्डनं सुनयनः पुंसादिरत्नाकरः
सभ्यत्वेन समं सदादिविदुषां लोकस्य धर्मायनम् ।
पूर्णः सर्वसमुद्रैभिः सुरितां (?) पुण्याम्भसा प्लावितः
श्रीमद्गुर्जरनामकोऽस्ति विषयोऽनेकप्रदेशाग्रणीः ॥३५॥
तस्मिन् धार्मिकनित्यदानसलिलः स्रोतःपवित्रीकृतो-
तुङ्गादभ्रजिनालयावलिमती स्वर्लोकलक्ष्म्यास्पदम् ।
विद्वद्भिः समलंकृता सुरपुरीस्पर्द्धाकरी सर्वदा
सेयं सर्वपुरोत्तमाऽस्ति नगरी त्र्यंबावतीसंज्ञका ॥३६॥
तत्र श्रीभावरत्नाभिधगुरुरभवत् सर्वशास्त्राधिवेत्ता
दानाच्चातुर्यसिन्धुर्जिनपदकमलद्वन्द्वसेवासुनिष्ठः ।
विद्वद्वृन्दप्रवन्द्यः सकलगु[रु]वरैः संयुतोऽन्वर्थनामा
नानाभावप्रवीणो जितकरणवयो विश्वविस्ता[र]कीर्तिः ॥३७॥
तस्यास्ति शिष्यो जयरत्ननामा संनामितानन्तगुणीन्द्र[वृन्द]ः ।
दयानिधानं सुकविः कलावान् तद्वैद्यवन्द्यः प्रथितः पृथिव्याम् ॥३८॥
अपि च सुविधिरत्नाद्या भवन्त्यस्य शिष्याः
नृपतिसदसि मान्याः सत्कलानां कलीयैः ।
नयविनयविवेकानेकलोकातिरेका
गुरुचरणसुभक्ताः स्वीयधर्मानुरक्ता[ः] ॥३९॥
श्रीविक्रमाद् द्वि-रस-षट्-शशिवत्सरेषु (१६६२)
यातेष्वथो नभसि माससिते च पक्षे ।

तिथ्यामतप्रतिपदि क्षितिसूनुवारे
ग्रन्थोऽरचि ज्वरपराजय एष तेन ॥४०॥
सन्तो भवन्तः स्वकरावलम्बं यदि प्रदास्यन्ति मम प्रसन्नाः ।
खला बलात् कारितमौनमुद्राः सारं करिष्यन्ति न दोषदानम् ॥४१॥
खलायतु बलाद् ग्रन्थे दूषणोद्घाटनानि च ।
सनिसर्गोऽत्र मौनं सत्तन्मध्येऽहमनुग्रहम् ॥४२॥

इति श्रीजयरत्नपण्डि[त]विरचिते ज्वरपराजयनामको ग्रन्थः सम्पूर्णः ।

संवत् १८९३ फाल्गुणमासे असितैकादश्यां कुजे श्री १०८ श्रीमद्विमलचन्द्राचार्य्यस्य शिष्येण श्री१०८ श्रीमद्रामचन्द्राचार्य्यस्य लघुभ्राता विहारिनाममुनिना लुङ्कोत्तरार्द्धसिंहराजगच्छीयेन सुढौराख्यनिगमे लिखितम् ।

[6448]

**आदिः–** शिवं प्रणम्य वागीशं धन्वन्तरिमथाश्विनौ ।
क्रियते टोडरानन्दे ग्रन्थः सद्वैद्यसम्मतः ॥१॥
दिशन्तु शं केशवशङ्कराद्या देवाः सुदेभ्योऽभ्यगसम्भवाद्याः ।
श्रीटोडरेन्द्रे नृपतौ सुमूर्त्तौ धर्मस्य भूमौ परिरक्षके च ॥२॥
मान्धातृदुःकुन्तसुतादिभिर्या पूर्वं कृता पद्धतिरद्य येन ।
मूर्द्धाभिषिक्तालिकभूषणेन समुद्धृता श्रीवरटोडरेण ॥३॥
भूदेवदेवान् भुवि दानयज्ञैः संतोष्य साधूनथ सर्ववर्णान् ।
कामैरनेकैश्च विलोक्य रुग्णानाज्ञापयद्रुग्विजये नरेन्द्रः ॥४॥
प्राचीनशास्त्राणि सुदुर्गमानि भिन्नप्रमेयानि निरीक्ष्य सम्यक् ।
एकत्र सर्वं भवता सुबोधं मतं कृतं टोडरमल्लभूपैः ॥५॥
श्रीटोडरो नृपवरो रसालंकारसन्मणिः ।
गृहीतदेहो लोकस्य रक्षार्थमिति मे मतिः ॥६॥
साधूनां रक्षिता नूनमसाधूनां विमर्द्दनः ।
तदाज्ञया सुश्रुतादिसारमुद्धृत्य सादरम् ॥७॥
निबद्धयते हितं सर्वं विशदाधारनिर्म्मलम् ।
ग्रन्थेऽस्मिन् टोडरानन्दे सर्वार्थपरिबृंहितम् ॥८॥

[6451]

**अन्तः–** सुधीरभूत् संसदि भूपतीनां सम्मानभाग् नागरवंशजन्मा ।
दोषज्ञमान्यः सुकविः कलावान् दयानिधानो भुवि देवराजः ॥३२६॥

तस्यात्मजः शार्ङ्गधरस्त्रिलोकीपतिं त्रिनेत्रं त्रिपुरां च शश्वत् ।
ध्यायन्निमां वैद्यमुदे त्रिदोषज्वरच्छिदे च त्रिशतीं चकार ॥३२७॥
मय्यनुग्रहबुद्ध्या वा कवित्वश्रुतिकौतुकात् ।
सन्तः सततमेवैनामाद्रियध्वं मनोरमाम् ॥३२८॥

इति यतिवरश्रीवैकुण्ठाश्रमशिष्येण राउलशार्ङ्गधरेण कृता त्रिशती सम्पूर्णा ।

संवत् १५५८ वर्षे कार्त्तिकशुदि ५ रवौ अद्य हाथिजग्रामे स्वस्थनवास्तव्यः स्वयं नरसंडाग्रामात् खेटकपुरज्ञातीयदु० भीमस्यात्मजलखापठनार्थं स्वहस्ते सुत-गोविन्दार्थं तथा स्मरतद्विजपठनार्थं परोपकारेणैव त्रिशती सम्पूर्णा लिखिता ॥

[ 6487 ]

**आदिः—** कपोलविगल्लोलदानपानीयपिच्छलम् ।
भ्रमद्भ्रमरभाङ्कारं वन्दे[हं] द्विरदाननम् ॥१॥
आपस्तम्बस्य(?) वलोपनाम्नो धाम्नो भासां कोटपल्लीभवस्य ।
तैलङ्गस्य प्रीतिभाजो गिरीशो काशीवासः कीर्तिभूरि[ति] कुर्वन् ॥२॥
राज्ञां मान्यस्यात्र शिंगणभट्टस्यासीत् पुत्रो वल्लभो वैद्यविद्यः ।
तस्यासीरन् सूनवोऽमी त्रिमल्लो रामो गोपश्चेति नाम्ना त्रयोपि ॥३॥
तेषु त्रिमल्लभट्टेन नाम्ना योगतरङ्गिणी ।
चिकित्सा लिख्यते भूरिग्रन्थेभ्यः स्वपरार्थिना ॥४॥

**अन्तः—** दोषास्तु दुष्टास्त्रय एवमन्यान् संपीड्य गाढं स्वरुजं च तीव्राम् ।
कुर्वन्ति सोक्षि० ।

[6496]

**आदिः—** यद्गण्डलग्नमदवारिबिन्दुपानालसातिनिभृतालिमाला ।
सद्गुञ्जितेन विनिहन्ति नवेन्द्रनीलशाङ्कासवो गणपतिः शिवमातनोतु ॥१॥
इन्दीवरं भवति यच्चरणारविन्दद्वन्द्वे पुरन्दरपुरःसरदेवतानाम् ।
वन्दारुतां कलयतां सुकिरीटकोटिः श्रीशारदा भवतु सा भवपारदा वः ॥२॥
श्रीवैद्यनाथतनयः सुनयः सुशीलः श्रीशालिनाथ इति विश्रुतनामधेयः ।
तेनावलोक्य विधिवद्विविधान् प्रबन्धानारच्यते सुकृतिना रसमञ्जरीयम् ॥३॥

**अन्तः—** इति बालतन्त्रे इति रसमञ्जर्यां नवमोध्यायः ॥

[ 6500 ]

**आदिः—** यच्चक्षुर्भुवनस्य दिव्यममलं धाम श्रुतीनां परं
यद्ब्रह्मैकनिकेतनं च पयसां बीजं यदेकं मतम् ।

सत्रेष्वग्निहुतस्य वेदविदितं स्थानं च यत् सर्वदा
तद्वः पातु सनातनं हरिमहस्तत्त्वप्रबोधोदयम् ॥१॥
दैवज्ञागमधर्मशास्त्रनिगमायुर्वेददुग्धोदधी
नामथ्य स्फुरदात्मबुद्धिगिरिणा विश्वोपकारोज्ज्वलम् ।
आलोक्यामृतमातनोति विबुधैरासेव्यमत्यद्भुतं
श्रीमत्तोमरदेवधर्मतनयः श्रीवीरसिंहो नृपः ॥२॥

इह खलु पुरुषार्थचतुष्टयाय धीमतां प्रवृत्तिः । तत्राद्यो धर्मः । स च शरीरमन्तरेण न सम्भवति । तच्च रोगरहितं धर्मकर्मक्षयं भवति । तत्स्वरूपनिरूपणाय तथैषां प्रतीकाराय च रोगाः परिगण्यन्ते [इ]ति च ॥ पूर्वाचार्योक्तास्तद्यथा ।

**अन्तः—** द्रोणी द्रोणाढकं प्रस्थः कुडवश्च पलं पिचुः ।
शाणको माषकश्चैव यथापूर्वं चतुर्गुणम् ॥४॥
सम्यक् प्रयोगः सर्वेषां सिद्धिमाख्याति कर्मणाम् ।
सिद्धिमाख्याति सर्वैश्च गुणैर्युक्तो भिषग् गुरुः ॥५॥

इति श्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहविरचिते ग्रन्थे ज्योतिःशास्त्रकर्मविपाकायुर्वेदोक्तप्रयोगमिश्रकाध्यायः समर्थितश्चायं ग्रन्थः ॥छ॥

न श्रेष्ठस्तरणिप्रभावजनितो वंशः समालोक्यते
रामाद्याः पृथिवीश्वराः समभवन् यत्र प्रतापोन्नताः ।
नो वा यत्र युधिष्ठिरप्रभृतयो भूपा बभूवुस्ततः
श्रेष्ठस्तोमरवंश एष विधिना सत्कर्मसंसेविना ॥१॥
तत्राभवत् कमलसिंह इति प्रसिद्धः सर्वागमावरणसेवितदेवसिद्धः ।
तस्मादतज्जगति भूपतिदेववर्मा विद्याविनोदमतिराहृतपुण्यकर्मा ॥२॥
श्रीदेववर्मात्मज एष धीरः शास्त्रत्रयाद् ग्रन्थमिमं व्यधत्त ॥
वीरसिंहावलोकस्य पुस्तकं विबुधावृतम् ।
वीरसिंहाज्ञया धीमान् सारङ्गो दिविरा(? रो)ऽलिखत् ॥
दैवज्ञधर्मशास्त्रज्ञवैद्यकज्ञपरीक्षितम् ।
पुस्तकं वीरसिंहार्थं सारङ्गो व्यलिखत् सुधीः ॥
इति श्रीवीरसिंहावलोकनः ग्रन्थः सम्पूर्णः समाप्तः ॥

स्वस्तिश्रीसंवत् १७२३ वर्षे शाके १५८९ प्रवर्त्तमान्ये(ने) ज्येष्ठ शुदि ७ रवौ रा० सुन्दरेण लिखितं अमदावादमध्ये रायपुरवास्तव्य उदिच्यज्ञातीयठाकर०श्री-५ भवजी सुतलहुजीपठनार्थं इदं (अयं) वीरसिहावलोकः समाप्तः ।

[6518]

**आदिः**— नत्वा शिवचरणाब्जं तातं कोणेरिसंज्ञितम् ।
वैद्यजीवनकाव्यस्य दीपिकां प्रतनोम्यहम् ॥१॥

**अन्तः**— इदानीं वैद्यजीवनटीकाकारः स्वकीयं वंशं कथयति—
यत्रागता त्र्यम्बकपर्वताच्च गोदावरी सिन्धुनदेन युक्ता ।
तत्रास्ति गोदातटरम्यदेशे षट्खेटकाख्यं नगरं सुरम्यम् ॥१॥
षट्षेटकैर्युक्तमिदं हि तत्र माण्डाभिधो वंशकरो बभूव ।
श्रीरामदेवेन नृपेण दत्तो धर्म्माधिकारश्च निबद्धमूलः ॥२॥
माण्डाभिधे वंशवरे वरेण्यः श्रीकृष्णनामा भिषगुत्तमोऽभूत् ।
कृतं च भाष्यं चरकस्य येन ग्रन्थं च साहित्यसुधासमुद्रः ॥
कृष्णादभूदमलकीर्तिलतावितानः श्रीहीरभट्ट इति वैद्यकुलावतंसः ।
तस्मादभूवंस्तनयाश्च पञ्च गुणैश्च कान्त्या मुनिभिः समानाः ॥४॥
नारायणो ज्येष्ठतरश्च तेषामोंकारग्रन्थश्च कृतो हि येन ।
तस्यानुजो विष्णुसमानकीर्तिः श्रीविष्णुनामा भिषजो वरेण्यः ॥५॥
तस्माद् भवत्सूनुरुदारकीर्तिः कोणेरिभट्टाभिधवैद्यवर्य्यः ।
ग्रन्थः कृतो येन च लक्षसङ्ख्यः समुद्रतुल्यः सकलोपयोगी ॥६॥
दुग्धाब्धेर्लब्धजन्मा भिषगपरिद्रवः ज्ञानतः कीर्त्तितश्च
श्रीमच्छ्रीखानखानातुलसदसि त्वभूद्वैद्यविद्यानवद्यः ।
.... .... .... .... .... .... .... .... ....
.... .... .... .... .... .... .... .... ॥७॥
कोणेरिभट्टस्य च सूनुरासीच्छ्रीरुद्रनामा जगति प्रसिद्धः ।
टीका कृता येन च पञ्चसङ्ख्या समुद्रतुल्या भिषजां च मान्या ॥८॥
टीका मदीया च भिषग्वराणां स्याद्वृत्तये ज्ञानविवृद्धये च ।
विद्याचणानां च विभावहेतोः भिषग्वराणां गुणिनां च कोशः ॥९॥
मिरयांखाननियोगे टीकेयं च मया कृता ।
तेन पुण्येन सकलं जगदस्तु निरामयम् ॥१०॥

इति श्रीमत्कोणेरिभट्टवैद्यपुत्ररुद्रभट्टविरचितायां जीवनटीकायां पञ्चमोल्लासः ।

[ 6521 ]

**मू०आदिः**— गुरुपादं चेष्टदेवं नत्वा वक्ष्यामि ग्रन्थतः ।
व्याधिनिग्रहनामोऽयं ग्रन्थोऽपि बालबोधकः ॥१॥

**मू०अन्तः**– संवदष्टादशे चाब्दे अङ्काग्निवर्षसंयुते (१८३९)।
भाद्रे मासे कृष्णपक्षे पञ्चम्यां गुरुवासरे ॥१२॥
कुर्मदेशे अर्जुनपुरे तन्निवासी सदा किल।
गुरुजीजीवाभिधानः गच्छश्चागमसंज्ञकः ॥१३॥
तस्य पिताम्बरः शिष्यः तत्पादवन्दकः सदा।
देवगुरुप्रसादेन त्रिश्रामः ग्रन्थकारकः ॥१४॥
इति श्रीवैद्यके व्याधिनिग्रहनामा ग्रन्थः सम्पूर्णः।
संवत् १८५२ ना कार्त्तिकशुदि १२ दने ल० चेलाराघवजी।

**स्त०अन्तः**–संवत् १८३९ ना वर्षे भादरवावदि ५ बृहस्पतिवारे ॥१२॥
कच्छदेशमां अंजारमध्ये रहे छे. गुरजी जीवो आगमगछे तेनो चेलो पीतांबर हतो तेनो त्रीश्राम तेण देवता गुरुनें प्रसादे आ ग्रन्थ कीधो छे।
इति श्रीव्याधिनिग्रहटबार्थ संपूर्ण। सं० १८५२ ना कार्त्तिशुद १२ दने लिषितं राघवजी अंजारनगरे।

[6548]

**मू०आदिः**– विमलमतिकिरणनिकरप्रभिन्नसच्छिष्यकमलसंघाताः।
सकलभुवनैकदीपा जयन्ति गुरुभास्करा भुवने ॥१॥
**अन्तः**– आश्चर्याण्येव रत्नानि तेषां माला पद्धतिः सा श्रीनागार्जुनाचार्येण निर्मिता गुम्फिता।
श्रीनृपविक्रमसमयाद् द्वादशभिर्नवतिषडधिके (१२९६) पौषे।
रचिता गुणाकरेण श्वेताम्बरभिक्षुणा जयति ॥४४॥
श्रीश्वेताम्बर पं० गुणाकरविरचिता आश्चर्ययोगमाला लघुवृत्तिः सम्पूर्णा। प्रत्यक्षरं लिखिता संवत् १७०२ वर्षे भाद्रपदसुदि ९ बुधे लिखिता जगद्वल्लभेन स्वार्थम् ॥

[6566]

**अन्तः**– इति श्रीमहाराजाधिराजप्रतापरुद्रदेवकृतचिन्तामणिग्रन्थकौतुकनिरूपणं तृतीयानादीतिः(?) समाप्ता।
संवताग्निरसात्यष्टिवत्सरे (१७६३) आश्विनमासे कृष्णेतरपक्षे भूतेष्टातिथौ चन्द्रात्मवारे विजयमुहूर्त्ते सम्पूर्णा कृताऽनुक्रमेणेयं प्रतिः ॥१॥
इति बीजकं सम्पूर्णं लिपीकृतं सत्यविजयेनेदम्।